तीयते । नैवं, उक्तरीत्या विष्णोरेव परमात्मत्वनिर्णयात् . तद्विषयो यच्छब्द स्तदवतारमात्रपरः, तस्यांशिन स्सर्वभूतब्रह्मादिविजातीयतया वतारः । औपचारिको वा ।

एतेन " ब्रह्मविष्णुशिवा ब्रह्मन् प्रधाना ब्रह्मशक्तय " इत्याद्यपि व्याख्यातम् । नच " स ब्रह्मा स शिव " इत्याद्यभेदोपदेशात् ब्रह्मादीनां नारायणेन स्वरूपैक्य माशंकनीयम् , स्रष्टृत्वसृज्यत्वाचर्यत्वार्चकत्वादिभे दव्यपदेशात् । अभेदव्यपदेशस्तु तदात्मत्वनिबन्धन इति प्रागेवोक्तम् ।

श्रुत्यन्तराण्येव मुक्तरीत्या नेतव्यानि । अत स्सर्ववेदेषु वेदान्तेषुच सर्वस्मा त्परत्वेन प्रतीतं परंब्रह्मनारायण एव , नब्रह्मरुद्रादिरिति सिद्धम् ।

तदेवं प्रत्यक्षश्रुतिभि र्नाराणस्यैव परत्वावगमात् पौरुषेयवचसां तदनुरोधेनैव प्रामाण्या त्तदनुरोधीन्येव पुराणादीनि श्रुत्युपबृंहणतयो पादेयानि ।

किंच नारायणपराणां पुराणानां सत्वमूलतया प्रामाण्यं इतरेषां रजस्तमोमूलतया अप्रामाण्यंच पुरुषनिर्णये सुव्यक्त मुक्तम् । तस्मा न्नारायण एव मुमुक्षुभि र्जिज्ञास्यं परं ब्रह्मेति सिद्धम् ।

वात्स्य श्रीदेवराजार्य नयनानन्ददायिना ।
वरदेन कृत स्तत्त्व निर्णयः श्रुतिसंमतः ॥

इति श्रीवात्स्यवरदार्य विरचितः

तत्त्वनिर्णयः ॥

Sasthra Mukthavali – 13

THE

# SIDDANTHA – CHINTHAMANI

( A Work on Vedanta Philosophy. )

*By*

*SREENIVASA CHARYA*

EDITED BY

*P. B. ANANTHA CHARIAR* PANDIT

Printed and Published

By the

*Proprietor "Sri Sudarsana" Press,*

*CONJEEVERAM.*

1902



Price 0–12–0

श्रीः

# शास्त्रमुक्तावळी ।

श्रीमतेरामानुजाय नमः ।

## सिद्धान्तचिन्तामणिः ।



ध्येयंसतां सर्वपदाभिधेयं मेयं श्रुतीना मपिभागधेयम् ।
सन्त्यक्तहेयं चिदचित्स्वकायं ब्रह्माद्वितीयं प्रणमाम्यमेयम् ॥

यतिपतिमानमामि निगमान्तगुरुं प्रणमा
म्यहरहराश्रये मम पितामह मण्णगुरुम् ।
पितरमभिप्रणौमि मम भाष्यगुरू न्कमला
निलयमखीश्वरां स्तकरुणाँ च्छरणं कलये ॥

अग्रजचरणानुग्रह जाग्रदशेषप्रशस्तशास्त्रगतिः ।
वेदान्तस्य रहस्यं विदुषां प्रीत्यै प्रकाशये किंचित् ॥

सिद्धान्तचिन्ता मनुभूय भूय स्सैद्धान्तिकं वर्त्म न ये विदन्ति ।
सिद्धान्तचिन्तामणि मेन मादा वादाय ते तत्वपदं विदन्तु ॥

इह खलु भगवा न्बादरायणो मुनि रौपनिषदः पुरुष इत्यादि श्रौतासाधारणनिर्देशै र्वेदान्तैकवेद्यतया ऽवगतं परं ब्रह्म "अथातो ब्रह्मजिज्ञासे" ति जिज्ञास्यतया प्रतिज्ञाय, तदवच्छेदकापरिचये तस्य दुरवगमत्वा त्तदवगमाय "तद्विजिज्ञासस्वे" ति श्रुतौ निर्दिष्टप्रतिनिर्देशकेन तच्छब्देन "यतो वा इमानी" त्यादिपूर्ववाक्यप्रतिपन्नस्या ऽभिन्ननिमित्तोपादानत्वरूप कारणत्वस्यैव जिज्ञास्यतावच्छेदकताप्रतिपत्ते रिहापि तदेव तदवच्छेदकं दर्शयितुं "जन्माद्यस्य यत" इत्यसूत्र

यत ; अन्यथाहि " अथातो धर्मजिज्ञासा " " चोदनालक्षणोऽर्थो धर्म " इतिवत् " अथातो ब्रह्म जिज्ञासा " " जन्मादिकारणं ब्रह्म " त्येव निरदेक्ष्यत् । अत एव " कारणन्तु ध्येय " इत्यथर्वशिखायां तदेव ध्येयतावच्छेदक मवगम्यते, ज्ञानस्य ध्यानार्थत्वात्, जिज्ञासायाश्च ज्ञानेच्छारूपत्वेन जिज्ञास्यतावच्छेदकस्यैव ध्येयतावच्छेदकत्वौचित्यात् ।

अत एव निर्गुणोपासनापक्षोऽपि प्रतिक्षिप्तः, कारणतावच्छेदका परिज्ञाने कारणताया अपि दुर्ज्ञेयतया उपादानगोचरापरोक्षज्ञान चिकीर्षा कृतिमत्त्वलक्षणकर्तृत्वात्मक निमित्तत्वोपयुक्त सार्वज्ञ सर्व शक्तित्वादे रुपादानत्वोपयुक्त चिदचिच्छरीरकत्वादेश्च जिज्ञास्यता वच्छेदककोटि प्रवेशावश्यम्भावात् ।

अत एव काल्पनिक धर्मविशिष्टोपासनपक्षोऽपि क्षुण्णः, मोक्ष हेतुभूतज्ञानविषयतावच्छेदकस्य काल्पनिकत्वायोगात् ।

अत एव प्रपञ्चमिथ्यात्वपक्षो प्यधिक्षिप्तः, चिदचिदात्मकस्य तस्या प्युपादानकारणतावच्छेदककोटिप्रवेशेन पारमार्थिकत्वावश्यम्भावात् । असत्या त्सत्यसिद्धे रन्यत्र विस्तरेण निरस्तत्वात् ।

स्यादेतत् , नानिमित्तत्वमुपादानत्वं चैकस्य सम्भवति, तयो भिन्नाश्रयवृत्तित्व नियमात् । अतएवहि समवायिकारणभेदघटितं निमित्तकारणलक्षणं न्यायविदो वदन्ति- " समवाय्यसमवायिभिन्नं कारणं निमित्तकारण " मिति । समवायिकारणोपादानशब्दयोरेक विषयत्वंच प्रसिद्धम् । घटादिनिमित्तकारणदण्डादे स्तदुपादानभूत मृदादेश्चभेदः प्रत्यक्षेणावगम्यते । अतएव न श्रुतिभिरपि तत्सिद्धिः , प्रत्यक्षविरुद्धत्वे तासां तात्पर्यायोगात । अतएवहि " आदित्योयूपः " " सोमेनयजेत " " कृष्णलं श्रपयेदि " त्यादौ प्रतीतार्थादर्थान्तरे लक्षणामभ्युपगमन्ति मीमांसकाः । एवं ब्रह्मननिमित्तं, उपादानत्वात , मृदा- दिवत ; ब्रह्मनोपादानं , निमित्तत्वात , दण्डवत , इत्यनुमानाभ्यामपि

तयोर्भिन्नाश्रयत्वं निर्णीयते । श्रुतिश्च " मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वर " मिति मायामायिनोरुपादाननिमित्तयोर्भेदं वदन्ती तयोस्स्वस्वाश्रयप्रतियोगिकभेद व्याप्यत्वं वह्निरवजलत्वादेरिवावगमयतीति ।

उच्यते - ननिमित्तोपादानयोर्भेदः प्रत्यक्षानुमानाभ्या मवगन्तुं शक्यः, घटादिनिमित्तस्यापि दण्डादेस्स्वनिष्ठरूपाद्युपादानत्वस्य प्रत्यक्षेणैवावगमात् । अतएव समवायिकारणभेदघटित निमित्तत्वनिर्वचनमपि न्यायविदामयुक्तम्, समवायिकारणत्वावच्छिन्न प्रतियोगिताकभेदविवक्षायां दण्डाद्यव्याप्तेः; यत्किञ्चित्समवायिकारणभेदविवक्षायां ब्रह्मणोपि तत्सम्भवात । अथतदुपादानभेद स्तन्निमित्ते विवक्षितः, अतोनदण्डाद्यव्याप्तिः । नवा ब्रह्मणितत्सम्भवः, तस्यैकं प्रत्येवोपादानत्व निमित्तत्वयोः स्वीकारादिति चेत्र ? मैवं, तथा सतिध्वंसं प्रति दण्डादेर्निमित्तत्वाभाव प्रसंगः, तदुपादानाप्रसिद्ध्या तद्घटित लक्षणा.प्रसिद्धेः । कालघटसंयोगादिकंप्रति कालस्य निमित्तत्वादुपादानत्वाच्च तत्राव्याप्तिश्च ।

अथस्यात्, उपादानकारणताभिन्नकारणत्वं निमित्तत्वमित्येव विवक्षितं, तद्भेदश्च तदवच्छेदकभेदात्, अस्तिचावच्छेदकद्वयं कालघटसंयोगादिस्थलेपि, समवायेन कार्यंप्रति तादात्म्येन द्रव्यत्वेन हेतुतया द्रव्यत्वस्य उपादानतावच्छेदकत्वात् - कार्यत्वावच्छिन्नंप्रति कालत्वेन कालस्य हेतुतया कालत्वस्य निमित्ततावच्छेदकत्वात, उपधेयसंकरेप्युपाध्यसंकराच्च, अतोनकालाद्यव्याप्तिश्च । अतएव नदण्डाद्यव्याप्तिरपि, रूपघटाद्युपादानता निमित्ततावच्छेदकयो द्रव्यत्वदण्डत्वयोर्भेदेन तद्गतोपादानत्वनिमित्तत्वयोरपि भेदात् । उपादानतावच्छेदकधर्मानवच्छिन्नकारणत्वं निमित्तत्वमिति स्वीकाराच्च नध्वंसंप्रति दण्डादेर्निमित्तत्वानुपपत्तिः, दण्डत्वस्य काप्युपादानता नवच्छेदकत्वा दिति ।

उच्यते - एवंहि ब्रह्मण्यपि नोपादानत्वनिमित्तत्वयोर्विरोधः, तस्य चिदचिद्विशिष्टवेषेणोपादानत्वात स्वरूपेण निमित्तत्वाच्च, तत्त दवच्छेदकभेदप्रयुक्त तद्भेदस्य तत्रापि निष्प्रत्यूहत्वा दिति ।

एतदुक्तंभवति, उपादानत्वंहि न ब्रह्मणःस्वरूपेण संभवेति, "निष्कळंनिष्क्रियंशान्तं निरवद्यंनिरंजनं" "अविकारायशुद्धाय नित्यायपरमात्मन" इत्यादि श्रुतिस्मृतिभिर्निर्विकारत्वेन प्रतिपन्नस्य तस्यावस्थान्तरयोगित्व लक्षणोपादानत्वस्य स्वरूपेणा सम्भवात । आनंदमात्रघन ब्रह्मोपादानकस्य जगत आनंदात्मकत्वापत्तेश्च । किंतु चिद् चिद्विशिष्टवेषेण । तद्वैशिष्ट्यंच शरीरशरीरिभावेनेति "यस्य पृथिवीशरीरं यस्यापश्शरीरमि" त्यारभ्य "यस्यात्माशरीरं यस्या व्यक्तंशरीरं यस्याक्षरंशरीरं यस्यमृत्युश्शरीर" मित्यंतेनांतर्यामि ब्राह्मणेनावगम्यते । "जगत्सर्वं शरीरंते" "तानिसर्वाणि तद्वपुः" "तत्सर्वंवैहरेस्तनुः" "यदन्नुवैष्णवः काय" इत्यादि महर्षिवचनैरपी दमेवोपष्टभ्यते ।

नचेदंशरीरत्वंगौणं, "यस्यचेतनस्य यद्द्रव्यंसर्वात्मना स्वार्थेनियाम्यं तत्तस्यशरीर" मित्यादि श्रीमद्भाष्योक्त शरीरलक्षणयोगादिति प्रपंचितं सारदर्पणेऽस्माभिः ।

ननुतत्र "यस्यवेदाःशरीरं यस्य यज्ञाश्शरीर" मिति वेद यज्ञयोरपि शरीरत्वं श्रूयते, नच तन्मुख्यमिति युक्तं प्रतिपत्तु, गुणक्रियारूपयोस्तयो रद्रव्यत्वेन शरीरत्वायोगात्, यस्य चेतनस्य यद्द्रव्यमिति द्रव्य पदप्रक्षेपेणैव श्रीमद्भाष्यादिषु शरीरलक्षणप्रणयनेन द्रव्यस्यैव शरीर त्वनिश्चयात । तत्र शरीरश्रुति र्गौणेति चेदन्यत्रापि तथात्वं कुतो नेष्यते । यदिच श्रौतव्यपदेशबलादेव तत्र मुख्यत्व मुच्यते, तुल्य मितरत्रापि । एतेन वेदयज्ञशब्दयो रभिमानिदेवतापर्यन्तत्व माश्रित्य

शरीरश्रुते मुख्यत्वोपपादनमपि निरस्तम्, पृथिव्यादिष्वपि तथात्व-स्य सुवचत्वात्, लक्षणाया अन्याय्यत्वस्योभयत्र साम्यात् । नच द्रव्यत्वघटित निरुक्तशरीरशब्द प्रवृत्तिनिमित्तराहित्या द्युक्तं तत्र लाक्षणिकत्वं, इहतु तत्सत्त्वा न्नलाक्षणिकत्वं युक्तमिति वाच्यम्; लक्षणेन प्रयोगलाक्षणिकत्वकल्पनस्या युक्तत्वात् । उक्तंहि -

" सिद्धानुगममात्रंहि कर्तुं युक्तं परीक्षकैः ।
न सर्वलोकसिद्धस्य लक्षणेन निवर्तनम् ॥ " इति ।

अन्यथा चेष्टेन्द्रियाद्याश्रय शरीरमिति नैयायिकोक्त चेष्टाश्रय त्वादिरूपप्रवृत्तिनिमित्तविरहात् पृथिव्यादिष्वपि शरीरशब्दो गौणः प्र-सज्येत । इत्थमेवच श्रीमद्भाष्ये दृश्यते - " लोकेच शरीरशब्दो घटादिशब्दवद्विषयविशेषे नियतवृत्ति मनासादितः क्रिमिकीटपतङ्ग सर्प नर पशु प्रभृतिष्वत्यन्तविलक्षणाकारेष्वगौणः प्रयुज्यमानो दृश्यते, तेन तस्य लक्षणं सर्वप्रयोगानुगुण्येनैव कार्यं, चेष्टेन्द्रियाश्रयत्वादि कं तु त्वदुक्तं शरीरलक्षणं न सर्वप्रयोगानुगुणं, यथोक्तेष्वीश्वरशरीर तया भिमतेषु पृथिव्यादिष्वव्याप्ते " रिति । "अगौणः प्रयुज्यमानोदृश्यत" इत्यस्याभिप्रायः श्रुतप्रकाशिकायां व्यक्त मुक्तः - " द्विपात्त्वं मनुष्यत्वं ब्राह्मणत्वंवा शरीरलक्षणत्वेन किमिति नोच्यते ? अन्यत्रापि शरीरशब्द प्रयोगादितिचेत् ? तर्हि सर्वप्रयोगानुगुणमेव लक्षणं प्रणेतव्यं, नत्व ननुयायिलक्षण मुक्त्वा प्रयोगस्य गौणत्वं सम्पादनीय " मिति । तस्मा दुभयत्र मुख्यत्वं गौणत्वंवा कल्पनीयं, न भाष्योक्तलक्षणानु गुण्येन अर्धजरतीयाश्रयणं युक्तमिति न तद्बलात् पृथिव्यादे र्मुख्य शरीरत्वाश्रयणं युक्तमिति चेत् ?

अत्र ब्रूमः-

श्रुतिप्रमापिते प्यर्थे कुतर्कै र्यदि निह्नवः ।
ब्रह्मनिह्नवसाम्राज्या दीश्वरस्स्या दनीश्वरः ॥

किं न गौणो ब्रह्मशब्दः कर्मकर्तरि चेतने ।
शक्यः कल्पयितुं सोपि स्वर्गसंसर्ग्यनर्गळः ॥
लोकन्यायाविरोधाय तत्र श्रौतेपि लक्षणे ।
प्रोक्तं द्रव्यपदं भाष्ये तद्युक्तान्यत्र लक्षणा ॥

तथाहि -

अन्तर्यामि ब्राह्मणोक्ता पृथिव्यादेश्शरीरता ।
मुख्याभ्यासोपपत्तिभ्यां युक्ता कारणतादिवत् ॥

काण्वमाध्यन्दिनयो रन्तर्यामि ब्राह्मणे " यस्य पृथिवीशरीरं " मित्यादिना बहुवारमभ्यस्य प्रयुक्तश्शरीरशब्दोनभाक्तो युक्तःप्रत्येतुं, उपक्रमोपसंहारादि बहुविध तात्पर्यलिंगमध्यप्रविष्टस्याभ्यासस्य "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तर " इत्यव्यवहितवाक्योपात्त प्रागुक्त शरीरशब्द प्रवृत्तिनिमित्तवत्त्वलक्षणोपपत्तेश्च तत्र तात्पर्यं विनानुपपत्तेः। पृथिव्यादेश्शरीरत्वस्य मानान्तरागोचरत्वेना पूर्वलक्षणंतात्पर्य लिंग सत्वाच्च । " विधिर्वास्यादपूर्वत्वात् " " विधिस्तुधारणेपूर्वत्वात " इत्यादिषु ह्यपूर्वत्वं तात्पर्यलिंगेषु मूर्धाभिषिक्तमाहुस्तान्त्रिकाः । नचास्यस्तावकत्वं विनाकारणेन कल्पयितुं युक्तम् , " वादमात्रं ह्य नर्थक " मिति न्यायात । अन्यथा वेदान्तानामेव कर्मकर्तृचेतन स्तावकत्वापत्त्याब्रह्मशब्दोपि तत्र भाक्तस्स्यात् । तस्यापि " यन्नदुः- खेन सम्भिन्नमि " त्यादि वाक्यप्रतिपन्नदुःखासम्भिन्न सुखरूपकर्मज- न्यस्वर्गादिफलसंसर्गित्वेन आनन्दाद्यात्मकत्वोपपत्तेः , अतएव असं- कुचितप्रसरज्ञानतया बृहत्त्वोपपत्तेश्च, कारणत्वाद्यभिधानमपि कर्मप्रवृ त्त्युपयोगित्वेन स्तुतिमात्रपरंस्यादिति निरीश्वरवादसाम्राज्यापत्तिः । नच पृथिव्यादे र्ब्रह्मशरीरत्वे मानान्तरविरोधः, येन यजमानप्रस्तरा भेदादाविव तात्पर्याभावश्शंक्येत । नताव त्प्रत्यक्षविरोधः, अतीन्द्रिय ब्रह्मशरीरत्वस्य प्रत्यक्षाद्यविषयत्वात ; जगतश्चतन्य प्रतिपत्तेश्च त-

स्पारतन्त्र्यग्राहकानन्यथा सिद्धागमविरोधेन चन्द्रप्रादेशिकत्वादि प्रत्यक्षस्यैव तद्वैपुल्यग्राहका नन्यथा सिद्धागम विरोधेन प्रतिहतत्वात ।

ननु भेदप्रत्यक्षविरोधादभेद श्रुतिर्नार्थव्यवस्थापिकेति क्वचिदुच्यते, इहत्वागमविरोधात्प्रत्यक्षं नार्थव्यवस्थापकमित्युच्यते, तदिदं विप्रति षिद्धमिति चेत ? मैवम् -

अन्यथा सिद्धिहीनन्तु बाधतेन्यदनीदृशम् ।
प्रत्यक्षंवा श्रुतिर्वेति नास्ति वैषम्य मञ्जनः ॥

इदं तावत्सर्वतान्त्रिकसम्मतं, यत्र द्वयोर्विरोध स्तत्रानन्यथासिद्धेनान्यथासिद्धं बाध्यत इति । अतएव " यजमानःप्रस्तरः " " अग्निर्वैब्राह्मण " इत्यादौ तत्सिद्ध्यादिभि रन्यथासिद्धं सामानाधिकरण्यं न तद्भेदग्राहि प्रत्यक्षविरोधेन अभेदं गमयितुमीष्ट इति प्रस्तरादेर्यजमानकार्य स्रुग्धारणादि कर्तृत्वाद्यजमानाभेदादि निर्देशो गौण इत्युक्तं तत्सिद्धिपेटिकायाम् । यत्रतु प्रत्यक्षमेव दूरस्थत्वादिभि रन्यथा सिद्धं, यथा - चन्द्रप्रादेशिकत्वादौ, तत्र तद्वैपुल्यग्राह्य नन्यथा सिद्धागमविरोधात्प्रत्यक्षमेव बाध्यते । तथाच " अग्निस्सर्वादेवता" इति सामानाधिकरण्यस्य " देवासुरास्संयत्ता आसन् तेदेवाबिभ्यतोग्नि म्प्राविशन् " इत्यादि श्रुतिप्रतिपन्नसर्वदेवताप्रवेशन निमित्तकत्वेनैव तत्त्वमसीतिसामानाधिकरण्यस्यापि सर्वत्रप्रसिद्ध्यधिकरण भाष्ये " सर्वंखल्विदं ब्रह्म " इति सामानाधिकरण्य निर्वाहकतया प्रतिपादित तज्जलानिति श्रयुक्ततज्जत्वादि हेतुनिमित्तकत्वेन " ऐतदात्म्य मिदं सर्वं तत्सत्यंस आत्मे" ति पूर्ववाक्यप्रतिपन्न तदात्मकत्वेनवा प्रागुक्तसर्वशरीरकत्वेनवा हेतुनान्यथासिद्धस्य नाहमीश्वर इत्याद्यनन्यथा सिद्धभेदप्रत्यक्षेणबाधोयुक्तः । इहत्वौपनिषदपरमपुरुषावगममूलकतयान्यथा सिद्धं जगत्स्वातन्त्र्यग्राहि प्रत्यक्षं तत्पारतन्त्र्यावगाह्य नन्यथा सिद्धागमेनैव बाध्यत इति नास्तिविप्रतिषेधः ।

यत्तु सति विरोधे प्रबलेन दुर्बलस्य बाध इति तावत्सर्वसिद्धम्, प्राबल्यंच स्वरूपकृतं स्वभावकृतं चेति द्विविधं, तत्रागमस्या पौरुषेयतयास्ति निर्विचिकित्सं स्वरूपकृतं प्राबल्यम्, तथा स्वभावकृतंचास्ति, नहि प्रत्यक्ष विरोधे आगमस्याप्रामाण्यमुच्यते, अपितु विषयान्तर तात्पर्यव्यवस्थापनेन प्रामाण्यमेव निरूप्यते । आगमेनतु चन्द्रप्रादेशिकत्वादे विषयस्यापहारा त्तत्प्रत्यक्षस्याप्रामाण्यमेवोच्यते, पौरुषेयत्वाच्च, ततश्चा पौरुषेयत्वा प्रामाण्यानर्हत्व लक्षणस्वरूपस्वभावकृत प्राबल्यद्वय शून्यतया दुर्बलेन प्रत्यक्षेण तदुभयवत्तया प्रबलस्या गमस्य नबाधो युक्त इति ।

अत्रेदं वक्तव्यं,

यद्यप्यपौरुषेयत्वा च्छ्रुतिर्बलवतीस्वतः ।
व्युत्पत्ता वुपजीव्यत्वा त्प्रत्यक्षं बलवत्तरम् ॥

इदंतावत्सर्वसंमतं, यदुपजीव्य प्रमाणप्रतिरुद्धे विषयेनोपजीवकं प्रवर्ततइति । अतएव व्याप्तिग्रहा द्युपयोगितया स्वोपजीव्य प्रत्यक्षापहृते वह्न्यनौष्ण्यादौ नानुमानंप्रवर्तते । अतएव औदुम्बरी सर्ववेष्टन स्स्मृतिस्स्वोपजीव्य स्पर्शन श्रुतिविरोधा न्नप्रवर्तते । प्रत्यक्षंच व्युत्पत्ति ग्रहाद्युपयोगितया शब्दस्योपजीव्यम्, नच तद्विरोधिनमर्थं श्रुतिर्बोधयितुं शक्नोतीति तत्सिद्ध्याद्युदाहरणेन प्रागेवावोचाम ।

किंच-नहि प्रबलं प्रबलमित्येव बाधकम् दुर्बलं दुर्बलमित्येव बाध्यम्, अपितु सतिविरोधे । विरोधश्च नप्रमाणयो स्तेजस्तिमिरयोरिव स्वरूपकृत स्संभवति, अपितु प्रमेयप्रतिरोधकृतो विरोधः । सच तदभावगोचरत्वाद्वा तदभावव्याप्यार्थान्तर गोचरत्वाद्वा । तत्राद्यः अयं सर्पो नायं सर्प इत्यादौ, " अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णाति " त्यादौ । द्वितीयस्तु–संशयोत्तर प्रत्यक्षादौ " व्रीहिभि र्यजेत यवै र्यजेते " त्यादौच । तत्र द्वयोः प्रत्यक्षत्वा विशेषेण स्वरूपकृतबलाबलासम्भवात् प्रागुक्तान्यथासिद्धत्वानन्यथा

सिद्धत्वाभ्यामेव बाध्यबाधकव्यवस्था कर्तव्या । नच परत्वा दुत्तरेण पूर्वस्य बाध इति युक्तं, धारावाहिकभ्रमस्थले व्यभिचारात । अत एव न भूयस्त्वमपि निर्णायकं, शतान्धन्यायेन अप्रयोजकत्वात । षोडशिग्रहणाग्रहणव्रीहियवादि ष्वभिमतपरत्व बहुत्वयो रभावेपि बाधदर्शनाच्च । श्रुत्योरपि विरुद्धयो र्बाध्यबाधकभावव्यवस्थायां इदमेव निर्णायकं, यथा - सामान्यविशेषशास्त्रयो र्विरोधे सामान्यस्या र्थान्तर विषयत्वेनान्यथासिद्धत्वा दनन्यथासिद्धेन विशेषशास्त्रेण बाधः । यत्रतूभयोरपि विशेषविषयत्वा दन्यतरस्य विषयान्तराभावः, यथा - " अतिरात्रे षोडशिनं गृह्णाति " " नातिरात्रे षोडशिनं गृह्णाति " " व्रीहिभि र्यजेत यवै र्यजेत " " बृहत्पृष्ठं भवति " " रथन्तरं बृहत्पृष्ठं भवती " त्यादौ, तत्र नित्यनिर्दोषयो रुभयो रन्यतरस्याप्य प्रामाण्यायोगात प्रयोगभेदाश्रयणेन प्रामाण्यमेव व्यवस्थाप्यते । यत्र त्वसम्भवद्विकल्पसमुच्चयो विषयः प्रमाणद्वयेन बोध्यते, यथा - पाशग्रहा द्येकत्वं तद्बहुत्वंच श्रुतिद्वयेन, यथावा यजमानप्रस्तराद्य भेदस्तद्भेदश्च श्रुतिप्रत्यक्षाभ्यां, तत्राप्यनन्यथासिद्धेन अन्यथासिद्धं बाध्यते । इयांस्तु विशेषः, अनन्यथासिद्धप्रमाणान्तरप्रतिरोधे सत्य प्यपौरुषेयतया नित्यनिर्दोषश्रुतिवाक्यं सर्वात्मना प्यप्रामाण्य मसहमानं श्रुतिप्रत्यक्षाद्यबाधित मर्थान्तर मादाय प्रामाण्य मश्नुते । प्रत्यक्षन्तु दोषमूलतया सम्भाव्यमान मनन्यथासिद्धमानान्तर विरोधा दप्रामाण्य मेवाश्नुते । नह्येतावता नन्यथासिद्धत्वप्रयुक्त प्रत्यक्षप्राबल्ये कश्चि द्विरोधः । अत एव " शास्त्रदृष्टविरोधाच्च " त्यत्र शास्त्रविरोधव त्प्रत्यक्षविरोधो प्यप्रामाण्यहेतुतया पूर्वपक्षे निर्दिश्यते जैमिनिना ।

एतेन स्वविरोध्यप्रामाण्यापादकत्वमेव स्वप्राबल्ये नियामकम्, तच्च प्रत्यक्षे नास्ति, तद्विरोधे प्यागमस्यार्थान्तरकल्पनया प्रामाण्यस्यैव प्रतिष्ठापना दित्युक्तमपि निरस्तम् ।

किञ्च –

उपक्रमादेः प्राबल्यं सर्वतान्त्रिकसम्मतम् ।
एवंहि व्याहता तत्र द्वयो र्हीष्टा प्रमाणता ॥

तथाहि- उपक्रमेणोपसंहारस्य विशेषेणसामान्यस्य निरवकाशेन सावकाशस्य नित्यस्य नैमित्तिककाम्याभ्यां उपदिष्टेनातिदिष्टस्येत्येवं बहुस्थलेषु बाधोव्यवस्थाप्यते । सच विना प्राबल्यमुपक्रमादेर्नोपपद्यते । नच तत्र स्वविरोध्युपसंहाराद्यप्रामाण्यापादकत्वं केनापीष्यते । अथ तत्राप्यापातप्रतीतार्थ गोचराप्रामाण्य व्यवस्थापकत्व मप्रतिहत मित्युच्येत? तुल्यमेतत्प्रत्यक्षादावपि, तत्राप्यापातप्रतिपन्न यजमानप्रस्तराद्यभेदगोचराप्रामाण्य व्यवस्थापकत्व सौलभ्यात ।

अथ ब्रूयात – यत्र विजातीययोः प्रमाणयोः परस्परविरोधः तत्रैव स्वविरोध्यप्रामाण्यापादकत्वरूपं प्राबल्यं बाधकतावच्छेदकमिति कल्प्यते. उपक्रमादिस्थलेतु सजातीययोरेव विरोधो न विजातीययोरिति तत्र तथाविध प्राबल्याभावेपि नदोषइति । प्रतिब्रूयादेनं, एवं हि यत्र सजातीययोरेव द्वयोर्विरोधः प्रत्यक्षयोरागमयोर्वा तत्र बाध्य बाधकभाव व्यवस्था नस्यात् , नियामकाभावादिति । तत्र यथनन्यथा सिद्धत्वमेव बाधकतावच्छेदकं तथान्यत्रापि तदेव तथास्तु, किमव्यापकेन विरोध्यप्रामाण्य व्यवस्थापकत्वेन । किञ्च-यत्रापि विजातीययोर्विरोधः तत्रापि तुल्ये प्रमेयविरोधे कथमागमस्य विरोध्यप्रामाण्यव्यवस्थापकत्वं ? कथं वा न प्रत्यक्षस्य ? नियामकाभावात् । नहि तत्रा पौरुषेयत्व मप्रामाण्यव्यवस्थापकतावच्छेदकमिति शक्यं कल्पयितुं, तथासति स्वविरोधि यजमान प्रस्तरादिभेदगोचर विजातीय प्रत्यक्षाद्यप्रामाण्याव्यवस्थापके तदभेदगोचरे "यजमानः प्रस्तर" इत्याद्यागमेव्यभिचारात् । अथ तत्रगत्यंतराभावा दन्यथा सिद्धत्वमेव विरोध्य प्रामाण्यव्यवस्थापक तावच्छेदकमिष्यते ? तर्हि तद्धेतोरेवेतिनया

तदेवबाधकतावच्छेदकमस्तु, किमन्तर्गडुना विरोध्यप्रामाण्य व्यवस्था पकत्वेनेति यत्किंचिदेतत । तथाच यथा प्रस्तरादौ यजमानत्वोत्कीर्तनस्य " यजमानमेवा यजमानादुत्तरं करोतितस्मा द्यजमानो यजमानादुत्तर " इति वाक्यान्तरप्रतिपन्ना यजमानभूतवस्त्वन्तरोत्तरत्वसंपत्युपयोगितया अन्यथासिद्धत्वा दनन्यथा सिद्धभेद प्रत्यक्षेणबाधः, तथा " ब्रह्मदृष्टिरुत्कर्षात् " " आत्मेतितूपगच्छन्ति ग्राहयन्तिचे" ति सूत्रोक्तन्यायेन " अथयोन्यान्देवतामुपास्ते ऽन्योसावन्योहमस्मीति नसवेद अकृत्स्नोह्येष आत्मेत्येवोपासीते " ति, श्रुत्या वस्तुतोऽन्यस्या अपि देवताया अन्यत्वेनोपासनं प्रतिषिध्य आत्मेत्युपासनस्य विहिततया तदुपयोग्युपदेशस्थस्य तत्त्वमसीत्यादि सामानाधिकरण्यस्य तत्प्रकारोपासनोपयोगितयावा प्रागुक्तोपादानोपादेयभावादिनावा लोके राज्ञोत्यन्तसदृशेमन्त्रिणि राजैवायमिति व्यपदेशदर्शना दिहापि "निरञ्जनः परमंसाम्यमुपैती"ति समानप्रकरणस्थवाक्यान्तरावगत परमसाम्यापत्तिनिमित्तकत्वेनवा ब्राह्मणोहमित्यादिव च्छरीरशरीरिभावेनवा अन्यथासिद्धस्य अनन्यथासिद्धभेदप्रत्यक्षेण बाधोयुक्तएव । नच तस्याप्यौपाधिकभेदविषयतया अन्यथासिद्धि शंक्या , उपाध्यनवगमेपि पामराणामपि तथाप्रत्ययात् । नचाहङ्ग्रहणस्य विशिष्टपरतयान्यथा सिद्धि शक्या कल्पयितुं, " नोएवात्मानं जानाति अयमहमस्मीति " " हन्ताहमिमास्तिस्रोदेवता " इत्यादौ केवलेप्यात्मनि अहम्पदप्रयोगात् तत्त्वमसीत्यादावपि विशिष्टपरत्व तौल्याच्चेति व्यक्तं प्राचीननिबन्धनेषु । अवश्यञ्चा भेदश्रुतीनां अन्यथासिद्धत्वं परेणान्यत्रा प्याश्रयणीयं, नहि " सदेवसौम्येद मग्र आसीत् " " ब्रह्मैवेदं विश्वं वरिष्ठं " " आत्मैवेदं सर्वं " " पुरुष एवेदं सर्व " मित्यादिबहुवाक्यप्रतिपन्नमपि जडाजडयो रैक्यं अनन्यथासिद्धमिति तेनापि प्रतिपत्तुं शक्यम् । अत स्तत्र यथा विवर्ताधिष्ठानताप्रयुक्तं इदं रजतमित्यादिव त्सामानाधिकरण्य मन्यथासिद्धत्वा न्न वास्तव भेदबोधक

मित्युच्यते, तद्व दिहापि सम्भावितान्यथासिद्धिकं तत्त्वमसीत्यादि सामानाधिकरण्यं नप्रत्यक्षप्रतिपन्नभेदविरुद्ध मभेदं बोधयितुं शक्त मिति युक्त मुक्तं तत्र प्रत्यक्षस्य प्राबल्यम् । जगत्स्वातन्त्र्यप्रत्य क्षस्य त्वतीन्द्रियब्रह्माप्रतिपत्तिमूलकत्वेन अन्यथासिद्धत्वा द्युक्तोनन्य- थासिद्ध तत्पारतन्त्र्यबोधकेना गमेन बाध इति । अतो न पृथिव्यादे र्ब्रह्मशरीरत्वे प्रत्यक्षविरोधः । नाप्यनुमानविरोध, तद्व्याप्यलिंगा भावात् । आगमविरोधेना नुमानस्यैव कालात्ययापदिष्टत्वाच्च । नाप्यागमविरोधः, तदसिद्धेः ।

अथ स्यात्

निर्गुणत्वाशरीरत्व निर्दोषत्वादिभि श्श्रुतैः ।
विरोधा न्न पृथिव्यादेः श्रुत्या सिद्ध्ये च्छरीरता ॥

तथाहि – ब्रह्मण स्ताव दशरीरत्वं तद्व्याप्यनिर्गुणत्वादयश्च श्रूयन्ते – "अशरीरं शरीरे ष्वनवस्थे ष्ववस्थितं" "सपर्यगा च्छुक्र मकायमव्रणं" "अपाणिपादो जवनो गृहीता" "पश्यत्यचक्षु स्सशृ णोत्यकर्णः" "यत्तदद्रेश्यमग्राह्यमगोत्र मवर्ण मचक्षु श्श्रोत्रं तदपा- णिपादं" "साक्षी चेता केवलो निर्गुणश्च" "निष्कळं निष्क्रियं शान्तं निरवद्यं निरंजन" मित्यादिषु । "नहवै सशरीरस्य सतः प्रि- याप्रिययो रपहति रस्ति । अशरीरंवा व सन्तं न प्रियाप्रिये स्पृशत" इत्यर्थान्तरन्यासनिर्देशश्च इदमेवोपष्टभ्यते । "अस्थूलमनण्वहृस्व" मित्यादिषु शरीरद्वारकस्थूलत्वाद्यवस्थानिषेधाअपि तस्या शरीरत्व मनुमापयन्ति । नहि पृथिव्यादिशरीरकस्य निर्गुणत्वं निर्दोषत्वं अश- रीरत्वं अस्थूलत्वादयोवा घटन्ते । यदपि "यः पृथिव्यां तिष्ठ" न्नित्याद्युपपत्तिवर्णनम् । तदपि न साधीयः, "अप्रतिष्ठो ब्रह्मलोकः निराधारो निर्विकल्पो निराख्यातः" "स्वे महिम्नि तिष्ठमानं पश्यती" त्यादिभि निराधारत्वस्य ब्रह्मणः प्रतिपन्नत्वेन तद्विरोधेन पृथिव्यां

तिष्ठन्नित्यादेस्स्वार्थतात्पर्यायोगात । सर्वव्यापकस्य पृथिव्या अन्तरत्वायोगाच्च । किञ्च न पृथिव्यादयश्शब्दाः पृथिव्यादिमात्रपराः प्रत्येतुं शक्याः, "यं पृथिवी न वेद" त्यादेरभागिप्रतिषेधत्वप्रसंगात्, किन्तु तदधिष्ठानभूतदेवताविशेषपराः प्रत्येतव्याः, नच चेतनस्य चेतनान्तरशरीरत्वं प्रत्यक्षादिविरुद्धं कल्पयितुं शक्यं, अतः ताद्धीन्यमात्राभिप्रायकश्शरीरत्वव्यपदेशो गौण इति ।

उच्यते ।

लोकप्रसिद्धि मादाय हिंसादिप्रतिषेधवत् ।
असावप्यन्यथासिद्धो नश्रौतं बाधितुं क्षमः ॥

उक्तं ताव दनन्यथासिद्धेना न्यथासिद्धं बाध्यत इति, तदेतद्विधिप्रतिषेधयो स्समानम् । तथाहि - निषेध स्तावत प्रतियोगिप्रापकप्रमाण मपेक्षमाणो यदि शास्त्रा दन्यदपि प्रापकं पश्यति तदा तन्मात्र मादाय विश्रान्तो न शास्त्र मुपरुणद्धि, यथा "न हिंस्या त्सर्वा भूतानी" त्यादिकं रागप्राप्तहिंसा मादाय विश्रान्तं नवैधाग्नीषोमीयहिंसा मुपस्पृशति, शास्त्रप्राप्तस्य सर्वधानिषेधे शास्त्राप्रामाण्यापत्तेः, पक्षतो निषेधे अष्टदोषदुष्टविकल्पापत्तेः ; यत्र न शास्त्रा दन्य त्प्रापक मस्ति, तत्र त द्यदि सामान्यविषयं तदा तस्य विषयान्तरे सावकाशत्वा त्स्वविषये शास्त्रम प्युपरुणद्धि, तद्यथा - "नकेसरिणो ददाति" "दीक्षितो नददाति नजुहोति नपचती" त्यादौ ; तत्र केसरि तदितरसाधारणं दीक्षित तदितरसाधारणंच प्रापकशास्त्रमितरविषये सावकाशं स्वविषये निषेधो बाधते ; यदितु प्रापकमपि विशेषमात्रविषयं, यथा "अतिरात्रे षोडशिनं गृह्णाति" "नातिरात्रे षोडशिनं गृह्णाती" त्यादौ, तदा तत्र गत्यन्तराभावा द्विकल्प एवांगीक्रियते ; यत्रतु शास्त्रा दन्यदेव प्रापकं, यथा "नकळंजं भक्षये"दित्यादौ, तत्र सर्वात्मनैव निषेध इतिहि तान्त्रिकमर्यादा । तथाचाशरीरत्वादिश्रुत्यवगत शरीरादिनिषेधोपि लोकप्रतिपन्नकर्मकृतशरीरादिक मादाय

विश्रान्तो नश्रुतिप्रापित पृथिव्यादिशरीरतादिप्रतिषेधाय यतत इति न तद्विरोधाद्यस्यपृथिवीशरीरामित्यादे स्तत्र तात्पर्याभाव श्शंक्यः। नह्यलौकिकार्थप्रतिपादनैदम्पर्येणप्रवृत्तं शास्त्रं मानान्तरागोचरं विषयं स्वयमेव प्रतिपाद्य उन्मत्तव त्स्वयमेव प्रतिषेधतीति युक्तमाश्रयितुम् । अन्यथा " नासदासीन्नोसदासीत्तदानीं परस्तान्न सन्नासन् नसदस" दिति ब्रह्मणोपि प्रतिषेधात्, " नतस्यकार्यं करणंच विद्यत " इति तस्य कार्यप्रतिषेधाच्च, सदेवेत्यादेर्यतोवेत्यादेश्च ब्रह्मणि तत्कारणत्वादौच तात्पर्याभावप्रसंगः । एवंच निर्गुण इत्यादावपि " यस्सर्वज्ञ स्सर्ववित " " सत्यकामस्सत्यसंकल्प " इत्यादिवाक्यान्तरप्रतिपन्न कल्याणगुणनिषेधासंभवात हेयगुणमात्रनिषेधपरत्व निश्चयात् न ब्रह्मण स्सर्वशरीरत्व विरोधगंधः ।

नच "नहवै सशरीरस्यसतः प्रियाप्रिययोरपहतिरस्ती " ति शरीरसंबंधस्य हेयसंबंधाविनाभाव बोधना त्सर्वशरीरस्य तत्प्रयुक्तहेय संबंधोपि दुर्वारइति वाच्यं । तत्र हवैशब्दनिर्देशेन लोकप्रसिद्धकर्मकृत शरीरवत्त्वस्यैव हेयव्याप्यत्वाभिधानात । दण्ड्यदण्डकयो रेक कारागृहवर्तिनोरपि यातनाहेतुभूतपातक सद्भावासद्भावाभ्यां दुःख तदभावयोर्दर्शनेन तत्रकारागृहसंबंधस्यैव इहापि शरीरसंबंधमात्रस्या प्रयोजकत्वाच्च । " द्वासुपर्णासयुजासखाया समानंवृक्षंपरिषस्वजाते । तयोरन्यःपिप्पलं स्वाद्वत्यनश्नन्नन्यो अभिचाकशीती "ति शरीरसंबंधाविशेषेपि जीवपरमात्मनो हेयसंबंधतदभावयो श्श्रुत्यैव प्रमितत्वेन कर्मसंबन्धस्यैव हेयसम्बन्ध व्याप्यत्वनिश्चयेन तद्विरोधेन शरीरसम्बन्धमात्रस्य हेयव्याप्यताया स्तद्वाक्यतात्पर्यविषयत्वायोगाच्च । " एषत आत्मान्तर्याम्यमृत " इति पृथिव्यादिशरीरताप्रतिपादकवाक्येष्वेव प्रतिपर्याय मन्तर्यामिण श्शरीरसंसर्गप्रयुक्त हेयसम्बन्धगन्धव्यावृत्तिफलकामृतत्वप्रतिपादनविरोधेन पुनः पृथिव्यादिशरीरसम्बन्धप्रयुक्त हेयसम्बन्धशंकानुत्थानाच्च । लोकप्रसिद्धश्रुतिप्रसिद्धयो र्लोकप्रसिद्धस्यैव शीघ्रोपस्थिततया प्रथमो

पस्थितप्राकृतगुणानामेव निषेधप्रतियोगित्व निश्चयाच्च । " गुणास्सत्वंरज स्तमः" " गुणागुणेषु वर्तन्ते । " " कारणं गुणसंगोस्य " " निर्गुणं गुणभोक्तृच " "नान्यं गुणेभ्यः कर्तारम् " " दैवीह्येषागुणमयी " " गुण-कलुषस्य सनातनेने " त्यादि परस्सहस्रप्रयोगबलेन कोशबलेनच सत्व रजस्तमसामेव गुणशब्दमुख्यार्थत्वनिश्चयेन तेषामेवेहापि प्रतियोगित्वेन प्रतीत्यौचित्याच्च । सर्वाध्यक्षत्वादे स्स्ववाक्यप्रतिपन्नस्यैव निषेधायो-गाच्च । कारणत्वे.पयुक्त सार्वज्ञ्यादिप्रतिषेधे कारणत्वस्यैवासिद्ध्या वेदान्तमात्रस्य निर्विषयत्वापत्तेश्च । " अक्ताश्शर्करा उपदधाति " " आदित्यंचरुं निर्वपे " दित्यादा वंजनसाधनद्रवद्रव्यसन्देहे प्राति पदिकार्थसंन्देहेच " तेजोवैघृतम् " " आदित्यानेवस्वेनभागधेये नोपधावती " त्यादि वाक्यशेषा त्तन्निश्चयवत, " यवमयश्चरुर्भवती " त्यादौ " यत्रान्याओषधयोम्लायन्ते अथैतेमोदमाना स्तिष्ठन्ती " ति वाक्यशेषा द्यवशब्दार्थनिर्णयवच्च, इहापि " अपहतपाप्माविजरोविमृ-त्युर्विशोकोविजिघत्सो ऽ पिपास " इति हेयगुणान् प्रतिषिध्य "स-त्यकामस्सत्यसंकल्प " इति कल्याणगुणान्विदधता वाक्यशेषेण हेय गुणानामेव प्रतिषेधप्रतियोगित्वं गुणशब्दार्थत्वयो रवधारणाच्च । निराल-म्बनोपासनायोगेन तदालम्बनभूत विग्रह तद्गुणनिषेधे ब्रह्मोपासना विधीना मननुष्ठानलक्षणा प्रामाण्यापत्तेश्च । गुणसामान्यनिषेधे सगुण वाक्यमात्र वैयर्थ्यापत्तेश्च ।

अथ ब्रूयात " पशुकाम उक्थ्यं गृह्णीयात् यत्कामोऽव्यूढच्छन्दसा द्वादशाहेनयजेते " त्यादिफलसम्बन्धबोधकवाक्यापेक्षित मानान्तरा गोचरोक्थ्यव्यूढादि स्वरूपप्रापकत्वेन " ऐन्द्रवायवाग्रं प्रथम मह " रित्यादिवाक्यानामिव निर्गुणवाक्यापेक्षितलौकिक सार्व-ज्ञ्यादिगुणसमर्पकतया सगुणवाक्यानां न वैयर्थ्यमिति । प्रतिब्रूयादेनं, एवंहि षोडशिग्रहनिषेधापेक्षिता लौकिकप्रतियोगिसमर्पकत्वेन षोडशि ग्रहविधि सार्थक्य सम्भवात् ग्रहणाग्रहणयोरपि विकल्पो न सिद्ध्येदिति ।

तत्र यद्युच्यते, अधिकारविध्यपेक्षित स्वरूपसमर्पकतया प्युक्थ्या दिवाक्यस्य फलार्थप्रयोगानुष्ठापनेनाप्यननुष्ठापनलक्षणा प्रामाण्यप्रतिरोधा युक्तमपेक्षित स्वरूपनिरूपणमात्रार्थत्वं । षोडशिग्रहविधौतु निषेधापेक्षित प्रतियोगिमात्रसमर्पकत्वे षोडशिग्रहणस्य पक्षेप्यननुष्ठानाद्ग्रहणविधे रननुष्ठानलक्षणमप्रामाण्यं दुर्वारमिति न तत्र प्रतियोगिसमर्पकतया तदन्वयइति ।

तत्रेदं प्रतिवक्तव्यं - तुल्यमिदं सगुणवाक्येष्वपीति; नहि तेषां निषेधप्रतियोगिमात्र समर्पकत्वे कदाचिद प्यनुष्ठापकत्वसम्भवः । नच स्थूलारुन्धतीन्यायेन शाखाचन्द्रन्यायेनच निर्गुणप्रतिपत्त्युपयोगिप्राथमिक सगुणप्रतिपत्त्यर्थतया सगुणवाक्यसार्थक्यमिति कल्पनायुक्ता, तत्र स्थूलताराप्रतिपत्ते स्तदविरोधि तत्सन्निहित सूक्ष्मताराप्रतिपत्त्युपयोगित्व सम्भवेपीह सगुणप्रतिपत्ते स्तद्विरोधि निर्गुणप्रतिपत्त्युपयोगित्वस्यातिमिरप्रतिपत्ते स्तेजःप्रतिपत्त्युपयोगित्वव दसम्भवदुक्तिकत्वादित्यन्यत्रविस्तरः ।

एव मपाणिपादत्वादीना मस्थूलत्वादीनांच "सनसाधुनाकर्मणा भूयान् नो एवासाधुनाकनीयान्" "नकर्मणावर्धते नोकनीयान्" "नभूतसंघसंस्थानो देहो स्यपरमात्मनः" "नचास्यप्राकृतामूर्ति" रित्यादि प्रमाणावगत कर्मकृतपाणिपादाद्यभावरूपतयाप्युपपत्तेः "सर्वतःपाणिपादं त त्सर्वतोक्षिशिरोमुखं" "द्वेवावब्रह्मणो रूपे मूर्तंचा मूर्तमेवच" "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ" "सहस्रशीर्षापुरुष स्सहस्राक्ष स्सहस्रपात्" "पूःप्राणिनस्सर्व गुहाशयस्य" त्यादिश्रुतिस्मृतिभि रुदाहृतान्तर्यामि ब्राह्मणादिभिश्च प्रतिपन्नस्य सर्व शरीरत्वस्य सिद्धौ नकश्चिद्विरोधः ।

किञ्च "पश्यत्यचक्षुस्सशृणोत्यकर्णः" "अपाणिपादो जवनोगृहीते" त्यादौ दर्शनश्रवणादिकार्यसाधनतया लोकप्राप्त चक्षुरादेरे-

घोपस्थिततया तेषामेव प्रतियोगित्वेना न्वये प्रतियोग्याकांक्षाशान्ते रलौकिकशरीरस्यैतेन ननिषेध शंक्यः; शीघ्रोपस्थितस्यैव निषेधान्वयनिश्चयात्। विधावपि ह्येषैव गतिः। अत एव ह्युपांशुयाजस्यशीघ्रोपस्थितपौर्णमासीकालिकत्वाभावात् "दर्शपूर्णमासाभ्या" मित्युपपदेन शीघ्रोपस्थितिकालिकाग्नेयादिप्रतिपादननिराकांक्षेणा ग्रहणे प्राप्ते तद्ग्रहणसम्पत्तये "तावब्रूता" मितिवाक्यस्य कालसम्बन्धविधायकता माहु स्तान्त्रिकाः।

एवं निर्दोषत्वमपि न पृथिव्यादिशरीरत्वविरोधि, कर्मकृतशरीरवत्त्वस्यैव दोषवत्त्वव्याप्यत्वात। पृथिव्यादेश्च परमात्मन स्स्वेच्छाकृतशरीरत्वेन कर्मकृतत्वाभावात्। नच निर्विकारत्वश्रुतेरिव निर्दोषत्वश्रुतेरप्यद्वारकदोषाश्रयत्व व्यावर्तकतया शरीरद्वारकदोषाश्रयत्वमपि न विरोधीत्येव कुतो नोच्यत इति वाच्यम्। अद्वारकविकाराश्रयमृदादेरिव अद्वारकदुःखाद्याश्रयस्य लोके प्यदर्शनात। शरीरद्वाराहि दुःखाद्याश्रयत्वं लोकेपि प्रतीयते। अत स्तथैव तन्निषेध्यम्।

किञ्च-निर्विकारत्वश्रुतिव दुपादानत्वश्रुतेरपि सत्त्वा त्तयो रुभयोः प्रामाण्याय युक्तं तत्र व्यवस्थित विषयत्व कल्पनम्। नह्येवं निर्दोषत्वव द्दोषाश्रयत्वमपि प्रमाणप्रतिपन्नं, येना त्रापि व्यवस्थितविषयत्व शंकास्यादिति यत्किंचिदेतत्।

यदप्यप्रतिष्ठत्वादि श्रुतिप्रदर्शनम्। तदपि लोकप्रसिद्धान्यायत्तस्थितिकत्वव्युदसनपरतया तस्या श्श्रुते रन्यथा सिद्धत्वादेव निरस्तं। नहि "यःपृथिव्यां तिष्ठ" न्नित्यादौ पृथिव्याद्यधीनस्थितिकत्वं परमात्मन उच्यते, येन तद्विरोधस्स्यात, तथासति पृथिव्यादेः परमात्मायत्तस्थितिकत्वालाभेन तच्छरीरत्वस्यैवासम्भवप्रसंगात; तदधीनत्वमात्राभिप्रायेण शरीरत्वोक्तिरिति वदतात्वयापि तथैवांगीकर्तव्यत्वाच्च। अतएव सूत्रमणिन्यायेन पृथिव्यादेरेव परमात्मायत्तस्थितिकत्वबोधनाय

पृथिव्या अन्तर इत्युच्यते । तस्मात् 'यः पृथिव्यां तिष्ठन्पृथिव्या अन्तर' इत्याभ्यां वाक्याभ्यां पृथिव्याद्यन्तरवस्थितत्वेसति तत्स्वरूपस्थिति प्रवर्तकत्वं तच्छरीरत्वोपयुक्त मत्र प्रतिपाद्यतइति नामनिष्ठत्वादिश्रुतिविरोधः ।

यदपि सर्वव्यापकस्या न्तरत्वा नुपपत्तिकथनम् । तदपि हास्यं, सर्वव्यापकत्वादेव बहिरिवा न्तरपि व्याप्तिसम्भवेना विरोधात् । नहि बहिर्व्याप्त्या न्तर्व्याप्ते रसाधारण्य भंगः, अन्तर्देशापरित्यागेनैव तद साधारण्य निर्वाहात् । अन्यथान्तरधिकरणस्य निर्विषयत्वापत्तेः ।

यदपि "यं पृथिवीनवेदे" त्यादे रभागिप्रतिषेधत्ववारणाय पृथिव्यादि शब्दानां तदभिमानि देवतापरत्वस्यावश्यकत्वा न्न पृथिव्यादे श्शरीरत्व सिद्धि रित्युक्तम् । तत्रेदं वक्तव्यम्,

अन्तरिक्षादिचयन प्रतिषेधो यथातथा ।
अन्यार्थवर्णितोप्येष प्रतिषेधो नबाधकः ॥

यथा " नपृथिव्यामग्निश्चेतव्यो नान्तरिक्षे नदिवि " इत्यत्र अन्तरिक्षादिचयन प्रतिषेधस्य शुद्धपृथिवीचयन प्रतिषेधदृष्टान्ततयोपादाना न्नाप्रसक्तप्रतिषेधदोषः, तथा 'यमात्मानवेदे' त्यादिभि र्वक्ष्यमाणचेतन दुर्ज्ञेयत्व प्रतिबिम्बतया पृथिव्याद्यवेद्यत्व निर्देशस्या न्यथा सिद्धत्वात न तदनुरोधेन अभिमानिदेवतापर्यन्तत्वकल्पनं युक्तम् । मिथ्याध्यवसितन्यायेना भिमन्तव्याभिमन्त्रो रन्तर्यामि स्वरूपापरिज्ञाने तुल्यताप्रतिपादनस्याभिमन्त्रपरिज्ञान दाढ्र्यावहत्वेन अन्तरत्वेप्यपरिज्ञानं हिरण्यनिधिन्यायेन तज्ज्ञानप्रतिबन्धकाज्ञानादि व्यावर्तकोपायोपदेशविरहादेव, नतु तत्र तस्यानवस्थानादिति सूचनेन अवश्योपदेश्यत्वप्रतिपादनार्थत्वेन स्वार्थतात्पर्यस्यापि वक्तुं शक्यत्वाच्च । अत्र वेदितृत्वप्रतिपादनेन अभिमानिपरत्वे "यःपृथिवीमन्तरोयमयती" त्यत्रापि तथात्वापत्त्या पृथिव्याद्यचिन्मात्रस्या नियाम्यतापत्तेश्च। तत्राचिन्मात्रपरत्वे वैरूप्यापत्तेश्च। "यंपृथिवीनवेदे" त्यादौ बाधकबला त्तत्कल्पने प्यन्यत्र न

तथात्वकल्पन मित्यस्य " यस्य पृथिवीशरीर " मित्यत्रापि सुवचत्वाच्च । अभिमन्तॄणां शरीरत्वे तद्द्वारा अभिमन्तव्यानामपि शरीरत्वानपायाच्च ।

यत्तु चेतनस्य चेतनान्तरशरीरत्वे प्रत्यक्षविरोध इति । तन्न, ब्रह्मशरीरत्वस्य प्रत्यक्षागोचरत्वस्य प्रागेवोपपादनात् । चेतनत्वेन ब्रह्म शरीरत्वाभावसाधनन्तु प्राण्यंगत्वादिना नरशिरःकपालशुचित्वानुमानमिव कालात्ययापदिष्टत्वा दप्रयोजकत्वाच्चा युक्तं । तस्मा न्न पृथिव्यादे र्ब्रह्मशरीरत्वे मानान्तरविरोधः ।

यत्तु "सदेवसोम्येद" मिति द्वैतविशिष्टं ब्रह्मप्रतिपाद्य तदुद्देशेन अद्वितीयमिति द्वैताभावविधाना दुद्देश्यतावच्छेदक देशकालावच्छेद्यत्वस्य विधेये धूमवान्वह्निमानित्यादौ प्रतिपन्नतया द्वैतकालावच्छेद्य द्वैताधिकरणवृत्त्यभावप्रतियोगितया पृथिव्यादे श्शुक्तिरजतादिव न्मिथ्यात्वनिश्चया न्न तेषां ब्रह्मशरीरत्वे श्रुतीनां तात्पर्यमिति कल्पनं । तदसत्कल्पनमेव, अद्वितीय पदस्य सजातीय द्वितीयराहित्य परत्वेन अन्यथा सिद्धत्वात् । यथाहु राचार्याः -

" यथाचोळनृप स्सम्राडद्वितीयो ऽद्यभूतले ।
इति तत्तुल्यनृपति निवारणपरं वचः ॥
नतु तत्पुत्रतद्भृत्य कळत्रादि निवारकम् । " इति ।

आहच पतञ्जलिः- " अस्य गोर्द्वितीयोन्वेष्टव्य इत्युक्ते गौरेव द्वितीयो न्विष्यते नाश्वो नगर्दभ " इति ।

घटोगन्धवान् आत्मा ज्ञानवा नित्यादौ व्यभिचारेण विधेये उद्देश्यतावच्छेदककालावच्छेद्यत्व नैयत्यासिद्धेश्च । त्रैकालिकस्य द्वैताभावस्य व्याप्यवृत्तितया अवच्छेदकानपेक्षत्वेन तत्र द्वैतकालावच्छेद्यत्व प्रतिपत्त्य सम्भवाच्च । सदेवेदमिति सामानाधिकरण्येन द्वैताभेदस्यैव प्रतिपत्त्या द्वैतवत्त्वाप्रतिपत्तेश्च । एकमेव त्येनैव तस्मि

द्वा:ऽवद्वितीयपद वैयर्थ्यापत्तिश्च । सिद्धान्तेतु तदैक्षतबहुस्या मिति वक्ष्यमाणाचिद्वारकबहुत्वावस्था प्रतिकोटिभूतैकत्वावस्थाबोधनेनैकाच्चिच्छरीरकत्वबोधना यैकमेवेति सार्थक मिति व्यक्तं भाष्यहृदयविदां।

एतेन अभेदश्रुतिविरोधा न्न ब्रह्मण स्सर्वशरीरत्व मिति शंका· परास्ता । उक्तभेदप्रत्यक्षविरोधेन 'द्वासुपर्णे'त्यादि श्रुतिविरोधेनचाभेदश्रुतीना मुक्तन्यायेना न्यथासिद्धत्वा त्स्वसमानाधिकरण स्वाश्रयप्रतियोगिक भेदव्याप्य द्वित्वावबोधकद्वासुपर्णेत्यादिवाक्यगत द्विवचना· दिश्रुतिविरोधेन, अन्योन्तरआत्मेत्या द्यन्यत्वश्रुतिविरोधेन 'ज्ञाज्ञौद्वाव जावीशनीशा' वित्यादि वाक्यश्रुताज्ञत्वसर्वज्ञत्वादिलक्षण परस्परा समानाधिकरण लिंगविरोधेनच, तत्त्वमसीतिसमानाधिकरणपदद्वया त्मक वाक्यमात्रेणा भेदबोधनासम्भवाच्च । यथाहजैमिनिः– "श्रुति लिंग वाक्य प्रकरण स्थान समाख्यानां परदौर्बल्य मर्थविप्रकर्षा " दिति । भेदश्रुतीनामुक्तरीत्या ऽ ननुष्ठापकत्वलक्षणाप्रामाण्यापत्तिश्चे त्यन्यत्रविस्तरः ।

इत्थमभ्यासोपपत्त्यादिभिः पृथिव्यादे र्मुख्यशरीरत्वेसति तद्धर्म भूतरूपरसादे स्तद्द्वारा नियाम्यत्वेपि देहधर्माणां देहत्वकल्पनस्य दे हाय मयंचदेहधर्मइति तद्वैलक्षण्यावगाहि प्रत्यक्षविरुद्धत्वा त्तेषांब्रह्म शरीरत्व व्यवच्छेदाय भगवा न्भाष्यकारो द्रव्यपदं तल्लक्षणे प्रा युयुजत । तदभिप्राय सर्वस्ववेदिनो व्यासाचार्या अपि गुणक्रियारूपयो र्वेदयज्ञयोरपि ब्रह्मशरीरभूत भूताकाशादि धर्मतया प्रतिपन्नयो श्शरीरत्वमसहमाना " वेदयज्ञशब्दौ तदभिमानि देवतापरौ, गुणक्रियारूपयो स्तयो रद्रव्यतया शरीरत्वायोगा " दित्यनुजगृहुः । अत्रयद्य प्युपक्रमाधिकरण न्यायेन चरमश्रुत शरीरशब्दस्यैव संजात प्र· तिपक्षस्य लक्षणायुक्ता, तथा प्यसकृदावृत्तशरीरशब्दावैरूप्याय द्रव्य परपृथिव्यादिप्रायपाठानुग्रहायच प्रथमश्रुतयोरपि वेदयज्ञशब्दयो रसंजात प्रतिपक्षयोरपि लक्षणाश्रयणंनायुक्तं । शब्दस्यगुणत्वं त्वाचा

यै र्न्यायसिद्धांजने प्रपंचितं , विवेचितंचास्माभि स्सारदर्पण इति नात्र तद्विस्तरः प्रस्तूयते ।

तस्मा त्स्वशरीरभूता विभक्तनामरूपावस्थापन्न चिदचिद्विशिष्टवेषेण ब्रह्मण उपादानत्वं तदुपयुक्तसंकल्पादि विशिष्टस्वरूपेण निमित्तत्वंच निष्प्रत्यूहमिति निमित्तत्वोपादानत्वयो रिहा प्यवच्छेदकभेद प्रयुक्तभेदस्य दुरपह्नवत्त्वा त्तयो रेकाश्रयवृत्तित्वस्य प्रागुपपादितत्वा न्न ब्रह्मणोऽभिन्ननिमित्तोपादानत्वे कश्चिद्विरोधइति ।

अतएव नानुमानमपि तद्भेदग्राहकं, तयो रभेदस्यापि प्रत्यक्षसिद्धत्वात् । धर्मिग्राहक प्रमाणबाधेन ब्रह्मानुपादानत्वसाधनसामर्थ्याभावाच्च । उपपादयिष्यतेच श्रुतिभि रनुपदमेव ब्रह्मण उपादानत्वं । " मायांतुप्रकृतिंविद्या न्मायिनन्तु महेश्वर " मिति श्रुतिरपि न ब्रह्मण उपादानभेदमवगमयति, किंतुविकारास्पद प्रकृतिशरीरकतया तदुपादानतां -तन्नियमनद्वारा तन्निमित्ततांच - मायि महेश्वरशब्दाभ्या मवगमयति । " विकारजननीमज्ञा " मित्यादावपि ज्योतिरुपक्रमाधिकरण न्यायेन ब्रह्मात्मक प्रकृतेरेव जगदुपादानता निर्णयात् । " सूयतेपुरुषार्थंच तेनैवाधिष्ठिताजग " दित्युत्तरवाक्ये " मयाध्यक्षेण प्रकृतिस्सूयते सचराचर " मिति गीतावचनानुरोधेन ब्रह्मात्मकता प्रतिपत्तेश्च नतेनापि निमित्तोपादान भेदसिद्धिरिति ।

अथ स्यात् । अस्तु निमित्तत्वोपादानत्वयो रविरोधः, तथापि ब्रह्मण स्तदुभयसद्भावे मानाभावः । अत्र न ताव त्प्रत्यक्षं प्रमाणं, अतीन्द्रिये तदप्रवृत्तेः । अत एव नानुमानमपि तत्र मानं, तस्य प्रत्यक्षावगम्यव्याप्तिज्ञानादिमूलकत्वात् । आगमस्तु तदुपादानग्राहको नन्यथासिद्धो ऽसिद्धः । यतो वेत्यादे र्निमित्तत्वेना प्युपपत्तेः । नहि पंचमी उपादानत्वमात्राभिधायिनी, दण्डाद्घटो जायत इत्यादौ व्यभिचारादिति ।

अत्रोच्यते ।

जनिकर्तुः प्रकृतिता मुपजीव्योपकल्पिता ।
विनोपादानता मेषा पंचमी नोपपद्यते ॥

तथाहि – " यतोवा इमानि भूतानि जायन्त " इत्यादिषु यत इत्येषा पंचमी न ताव त्कारणत्वमात्रार्थिका, तत्र तद्विधायक शास्त्रा भावात् । हेता विति सूत्रेण तत्र तृतीयाविधानाच्च । " ध्रुव मपाये पादान " मित्यारभ्य " भुवः प्रभव " इति पर्यन्तानां सूत्राणा मपा दान संज्ञाविधायकानां तत्रा सम्भवेन अपादाने पंचमी त्यनेनापि तदसम्भवाच्च । सर्वव्यापका त्केवला द्ब्रह्मण स्सकाशा त्प्रपंचस्य विश्लेषासम्भवेन ध्रुव मपाये पादानमित्यनेनापि पंचम्याअसम्भवदुक्तिक-त्वाच्च । अतो " जनिकर्तुः प्रकृति " रिति सूत्रेणैव सा वाच्या । प्रकृतिशब्दश्चो पादानार्थकः, मृद्घटादिषु मा गुत्तरावस्थापन्नेष्वेव प्रकृतिविकारभावप्रसिद्धेः, दण्डघटादिषु तदप्रसिद्धेश्च, सर्वविकार कारणे प्रधाने प्रकृतिशब्दप्रसिद्धेश्च । " मायान्तु प्रकृतिं विद्या " दित्यादौ तथैवा र्थदर्शनाच्च । प्रकरोती त्यवयवार्थपौष्कल्यस्य तत्रैव सम्भवाच्च । एतेन प्रकृतिशब्दः कारणसामान्यपर इति केषांचि दाशा प्रत्युक्ता ।

यत्तु प्रकृतिशब्दस्य कारणसामान्यपरत्वनिर्वाहाय दृष्टान्ततया " यदिन्दो रन्वेति व्यसन मुदयंवा निधि रपा मुपाधि स्तत्रायं जयति जनिकर्तुः प्रकृतिते " ति कविवाक्योदाहरणम् । तदप्याशा मात्रं, पुत्रदुहित्रोः पितृभूयोवयवानुवृत्ते धर्मशास्त्रसिद्धत्वेन समुद्रे चन्द्रपितृत्वप्रतिपादनैदम्पर्येण प्रवृत्ते तत्र श्लोके जनिकर्तृप्रकृतित्वोक्ते र्निमित्तत्वप्रतिपादनमात्रपरत्वकथनस्यो पहास्यत्वात् । चन्द्रस्य स-मुद्रैकदेशपरिणामरूपत्वे बाधकाभावाच्च । रसोत्पत्त्यर्थतया तत्र निमित्तकारणे प्युपादानत्वारोपेण प्रकृतिशब्दप्रयोगोपपत्त्या तेन तस्य

कारणमात्रपरत्वनिर्णयायोगाच्च । दृश्यते ह्यन्यत्रापि "कलशे निज हेतुदण्डजः किमु चक्रभ्रमकारिता गुण" इत्यत्र दण्डघटयो रुपादानोपादेयभावारोपेण दण्डगतचक्रभ्रमिकारित्वस्य गुणत्वेनाभिमन्यमानस्य कलशे संक्रान्तिवर्णनम् । नचै तादृशं क्वचिदपि वस्तु व्यवस्थापक मिति केना प्यभ्युपगम्यते ।

ननु, "भत्वाद्विवारभेदा" दित्यादिभाष्यदर्शनात्, पुत्रा त्प्रमोदो जायते, वह्निमा न्धूमवान्, नास्ति घटोनुपलब्धे, रित्यादि बहुतरप्रयोगात्, "तदशिष्यं संज्ञाप्रमाणत्वात्" "लुब्योगाप्रख्याना द्विषयेण तु नाना लिंगकरणा" दित्यादिसूत्रवार्तिकनिर्देशाच्च कारणत्व मपि पंचम्यर्थो वाच्यः । अस्ति च तत्र ज्ञापकं "हेतुमनुष्येभ्यो न्यतरस्यां रूप्य" इति सूत्रम् ; तत्र हि हेत्वर्थकपञ्चम्यन्ता द्रूप्यप्रत्ययविधान मसत्यां हेतुपञ्चम्यां नोपपद्यत इति तेन हेत्वर्थे पंचमी ज्ञाप्यते । अतः प्रकृतिशब्दः कारणमात्रपरो वाच्यः । अत एव वृत्तौ तथैवोच्यत इति चेत् ;- नैवं, "विभाषा गुणे स्त्रिया" मिति सूत्रप्राप्तपंचम्यन्त मादाय रूप्यप्रत्ययविधानपरतया पर्यवसन्नस्य 'हेतुमनुष्येभ्य' इति सूत्रस्य कारणसामान्ये पंचमीसद्भावज्ञापनपर्यन्तसामर्थ्याभावात् । अत एव निरुक्तभाष्यादिप्रयोगोपि निर्व्यूढः । पुत्रा त्प्रमोदो जायत इत्यादिक मप्यगुणे गुणत्वारोपा दुपपद्यते । नास्ति घटो नुपलब्धे रित्यादिक मपि "स्वं रूपं शब्दस्ये" ति सूत्रे "शब्देना र्थगते" रिति वार्तिकनिर्देशा दस्त्रियां ग्रहणस्या नित्यत्वाश्रयणा दुपपद्यते । उक्तं हि तत्र कैय्यटेन - "कात्यायनवचनप्रामाण्या दस्त्रिया मिति प्रतिषेधस्या नित्यत्वा द्विभाषा गुणे स्त्रिया मिति पंचमी" ति ।

किंच-यथा "शक्यंच नाम क्षुत्प्रतिहन्तु" मित्यादिभाष्यप्रयोगेषु विद्यमानस्यापि स्त्रीत्वस्या विवक्षयापि शक्य मिति नपुंसकनिर्देशः ।

एव मिहापि स्त्रीत्वाविवक्षया पंचमी कल्पयितुं शक्या । वस्तुत स्तू क्तस्थले सर्वत्रा प्यनुपादाने प्युपादानत्वारोपेण जनिकर्तुः प्रकृति रिति सूत्रेणैव पंच म्यस्तु । इष्यते हि पाराशर्यो व्यासो जामदग्न्यो राम ऐन्द्रो मन्त्र इत्यादा वगोत्रे अनन्तरापत्ये यागसंप्रदानरूप देवताभिन्ने इन्द्रे च गोत्रत्व देवतात्वाद्युपचाराद्यत्रणोः प्रयोगः । यथाहुः- " अनन्तरेपि गोत्रत्वोपचाराद्यञणि " ति " मन्त्र स्तुत्य मपि देवते त्युपचरन्ति विद्वांस " इति च । विभाषा गुणे स्त्रिया मिति तु सूत्रमुख्यप्रयोगाभिप्रायम् ।

यत्तु उक्तप्रयोगनिर्वाहाय प्रक्रियामञ्जरी पदमञ्जर्यादिषु विभाषा गुणे स्त्रिया मित्यत्र योगविभागकल्पनं, तत्त्वन्तरेणा प्यारोप मुक्त प्रयोगनिर्वाहाभिप्रायम्, नतु प्रकारान्तरसम्भवाभिप्रायम् । अन्यथा पाराशर्यो व्यास इत्युदाहृतप्रयोगनिर्वाहाय ' गर्गादिभ्यो गोत्रे ' ' सास्य-देवते ' त्यत्र च योगविभागकल्पनापत्ता वारोपितार्थकत्व परकैय्यटादिग्रन्थविरोधापत्तेः । नच यतो वेत्यत्रापि तथा निर्वाह श्शंक्यः, मुख्ये बाधकाभावात् । ' य त्प्रय न्त्यभिसंविशन्ती ' त्युत्तरवाक्ये लयाधिष्ठानत्वप्रतिपादनेन निमित्तकारणे तदसम्भवे नोपादानपंचमी त्वनिश्चयाच्च । वृत्तिग्रन्थ स्त्वनुपद मुदाहरिष्यमाण प्रत्याख्यान भाष्य तद्व्याख्यानग्रन्थविरोधा दुपेक्ष्यः । अस्तु वा योगविभागः प्रामाणिकः, तथापि तस्योन्नेयतया चोदकवत्प्रत्यक्षविध्य विषय एव प्रवृत्त्या यतो वेत्यादौ ' जनिकर्तुः प्रकृति ' रिति प्रत्यक्षविधिविषये तदप्रवृत्तेः न तेन तस्या न्यथासिद्धि श्शंक्या ।

एतेन यत इति सार्वविभक्तिक तसिलन्तत्वकल्पनया अन्यथा सिद्धिशंकापि प्रत्युक्ता, प्रागुक्तलयाधिष्ठानत्वप्रतीत्यनुरोधेनो पादानपंचम्यंतत्वनिश्चयात् ।

यस्तु जगदाधारताप्रयोजकसम्बन्धेन कालादे रिव ब्रह्मणोऽपि लयाश्रयत्वं नोपादानतागमक मिति भ्राम्यति । स इत्थं प्रतिबोधनीयः, नह्यत्र कालादिव जगदाधारताप्रयोजकसामान्यसम्बन्धेन लयाश्रयत्वं बोध्यते, किन्तूपादानत्वासाधारणसम्बन्धेन । तथाहि – यत्प्रयन्त्यभिसंविशन्ती ति नैत लिङन्तं पदद्वयं, तथा सति पूर्व वाक्यद्वय इव पञ्चद्वयश्रवणापत्तेः । किन्तु प्रयन्ती त्येत न्नपुंसकप्रथमाबहुवचनान्ततया जातानीतिव द्भूतानी त्यस्यैव विशेषणं । तथाच प्रयन्ति - प्रलीयमानानि सन्ति, भूतानि यदभिसंविशन्ति – यदवस्थां प्राप्नुवन्ती त्यर्थः । सिद्धान्तेहि न तार्किकै रिव अभावात्मको लयोऽङ्गीक्रियते, किन्तु कारणावस्थापत्ति रूपः, " पृथिव्यप्सु प्रलीयते " इत्यारभ्य प्रतिपादितस्य लयस्य " तमः परे देव एकी भवती " त्येकत्वापत्तिरूपतयो पसंहारात् । 'अप्ययवस्थे च सलिले " इति विष्णुपुराणे पठितत्वाच्च । अतः कारणावस्थापत्तिरूप लयस्याभिधायकाभ्यां 'प्रयन्त्य भिसंविशन्ती ' त्याभ्यां पदाभ्यां कालादि[illegible] लयाधिष्ठानत्व प्रतीय[illegible] इत्युपादानत्व[illegible] अर्थ तादि लिति निश्चीयते । [illegible] लक्षणिकलार्थविवक्षितस्य नास्ति [illegible]सम्भवात् । ' आग्नेयं चतुर्धा करोती " त्यादि[illegible] सम्भवे अनिर्धारितविभक्त्यर्थक [illegible] । " आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते " इति [illegible] कारणवाचकशब्दस्य सारूप्याय पञ्चम्यन्तत्वनिर्देशाच्च । [illegible] निरपेक्षस्वार्थबोधकत्वसम्भवे सापेक्ष स्वार्थबोधकविभक्तिकल्पनायोगाच्च ।

यत्तु जनिकर्तुः प्रकृति रित्यत्र जायमानस्य यदुपादान मिति लोकप्रसिद्धो पादानत्वोपजीव्येन अपादान संज्ञाविधाना त्तद्बला दलौकिकवस्तुष्वपि इति कस्यचि त्कल्पनम् । तदसत्कल्पनमेव, यो

मत्तया प्रसिद्धमहानसाद्युपजीवनेन धूमे वह्निव्याप्तिनिश्चये वह्निव्याप्य धूमादिदर्शनेना दृष्टवह्निके पर्वतादौ वह्नयादिनिश्चयवत् इहापि लोकप्रसिद्धो पादानत्वोपजीवनेन अपादानत्व मुपादाय पंचमी विधाने सत्य न्यत्राप्युपादानत्वा विनाभूत पंचमीदर्शनेनोपादानत्व निश्चयसंम्भवात । अन्यथा "ज्योतिष्टोमेनस्वर्गकामोयजेते" त्यादौ तृतीययाज्योतिष्टोमादेः करणत्वं "व्रीहीनवहंन्ती" त्यादौ द्वितीयया व्रीह्यादेःकर्मत्वं "मैत्रावरुणायदण्डं प्रयच्छती" त्यादौ चतुर्थ्यामैत्रावरुणादेरुद्देश्यत्वं "आग्रयणाद्गृह्णाती" त्यादौ पंचम्या आग्रयणाद् रपादानत्वं "दीक्षासोमस्य" "दक्षिणासोमस्ये" त्यादौ षष्ट्यादीक्षा दक्षिणयोः सोमशेषत्वं "समेयजेत" "अमावास्यायांच पौर्णमास्यां चाच्युतोभवती" त्यादौ सप्तम्यादेशकालादे रधिकरणत्व मित्यादि सर्वंनसिद्धयेत्, तत्रापिलोकप्रसिद्ध दण्डादिगत करणत्वाद्युपजीवनेनैव क्रियासिद्धौ यत्प्रकृष्टोपकारकं तत्करणमित्यादिना करणादिसंज्ञाविधाननतेना लौकिकयागादिगत करणत्वाद्य सिद्धेरिति यत्किंचिदेतत् ।

स्यादेतत् "ध्रुवमपायेपादान" मितिसूत्रेणैव स्वविषयसिद्धया "जनिकर्तुः प्रकृति" रितिसूत्रंभाष्ये प्रत्याख्यातं, तथाचनामभाष्यं - "अयमपि योगश्शक्योवक्तुं, कथं ? गोलोमाविलोमाभ्यां दूर्वाजायंत इति, अपक्रामन्तितास्तेभ्य" इति । तत्रयदियतोवेत्ये तदपि जनिकर्तृसूत्रविषयस्स्यात तदा तस्यध्रुवमपाये पादानमिति सूत्रेणासिद्धया सूत्रप्रत्याख्यान मेवानुपपन्नंस्यात् । नहिसर्वव्यापका द्ब्रह्मण स्सकाशा त्तदविनाभूतस्य प्रपंचस्य विश्लेषस्संभवतीति ।

अत्रेदंवक्तव्यं, लोकप्रसिद्धोदाहरणान्यथासिद्धिमात्राभिप्रायकस्य प्रत्याख्यानस्य श्रुतिप्रसिद्धसैद्धांतिकोदाहरणा व्याप्तित्वेपि दोषाभावइति । उक्तंहिकैय्यटेन- "लोकप्रसिद्धाश्रयणेनैतदुच्यते, लोकेहियद्यस्माज्जायते ततस्मादपक्रामत इत्युच्यते, तन्त्राश्रयास्तुप्रक्रियाभिद्यंते, वैशेषिक मतेपरमाण्वादि समवेतंकारणेभ्यो पृथग्देशंकार्यमुत्पद्यत इति नास्ति

कार्यस्यापक्रमः, सांख्यदर्शनेप्याविर्भाव तिरोभावलक्षण जन्मनाशरूप परिणामाभ्युपगमान्नास्त्यपक्रम " इति ।

किंच कारणसामान्यार्थकत्व वादिनोपिशंकेयं समाना, नहि "यतोवा इमानि भूतानिजायन्ते" "पुत्रात्प्रमोदोजायत" इत्यादेरेतत्सूत्रमात्र विषयस्य तन्मतेपि ध्रुवमपायइत्यनेन अन्यथासिद्धिसंभवः । ब्रह्मणस्सकाशाद्भूतानां पुत्राच्चप्रमोदस्य विश्लेषासम्भवात् । द्वितीयेविभागस्य संयोगपूर्वकस्य प्रागसंयुक्तादसंभवात् ।

नच योगविभागेनैतदुदाहरण सिद्धिमाश्रित्य तत्प्रत्याख्यानमितिवाच्यं, तथासति सर्वोदाहरण व्यापकयोगविभागाश्रयणेनैव सर्व सूत्रप्रत्याख्यानसम्भवे तदनभिधानेन ध्रुवमपायेपादानमिति सूत्रेणान्यथासिद्धिमाश्रित्य प्राकरणिक सर्वसूत्रप्रत्याख्यान परभाष्यस्वारस्य भंगप्रसंगात् । प्रसिद्धोदाहरण विषयतयावा प्रौढवादेनवा भाष्योन्नयनस्यास्मत्पक्षेपि समत्वात् । ततोजातंतस्मा द्विभक्तमिवदृश्यत इत्याश्रित्य तद्विषयकल्पनस्यापि तुल्यत्वात ।

वस्तुतस्तु उपादानस्थलेपि न सर्वत्रलोकेपि विश्लेषः, कृत्स्नपरिणामेतदसम्भवात, किंतु एकदेशपरिणामएवेति तदभिप्रायकं प्रत्याख्यानंवाच्यं, तच्चेहापि सम्भवति, विशिष्टैकदेश परिणामांगीकारात् । अतोनतद्विरोधः ।

किंच सूक्ष्मचिदचिद्विशिष्ट मुपादानमिति वक्ष्यते, तस्माच्च स्थूलावस्थस्यविश्लेषोयुज्यते, विश्लेषोहिन सर्वात्मनाकारणदेशपरित्यागः, शृंगाच्छरोजायत इत्यादौशरादेरपि शृंगदेशापरित्यागा दर्शनात । किंत्वधिकदेशसम्भवः, सचस्थूलावस्थ प्रपंचेपिसमानः । सर्वव्यापकस्यापिब्रह्मणः सूक्ष्मावस्थचिदचिद्विशिष्टवेषेण विभागापादनयोरुपपत्तेः । तस्मात्प्रथमीताव दुपादानपंचमीमाणम् ।

अस्तु वा कारणत्वमात्रे पंचमी, तथापि यतो वेत्यादे रनुवादकतया प्रापकवाक्याधीन स्वतात्पर्यकत्वा त्प्रापकवाक्येषु च सर्वेषु वक्ष्यमाण रीत्या निमित्तत्वोपादानत्वयोर्द्वयोरवगमात् इहानिकारणत्वस्यापत्तिरूप लयप्रतिपादनेन "येन जातानि जीवन्ती" ति तदेकजीवनत्व प्रतिपत्त्या निमित्तान्तराभाव सूचनेनच यत इत्यादेरुभयविध कारणत्व तात्पर्यकत्वनिश्चयाच्च न ब्रह्मण उपादानत्वासिद्धौ कश्चिदन्तरायः ।

तथा "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" "आत्मनि खल्वरे दृष्टे श्रुते मते इदं सर्वं विदितं भवति" "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं भवती" त्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञानमपि सर्वोपादानत्वमाह । नहि निमित्तकारणज्ञानात् कार्यज्ञानं सम्भवति, दण्डादिज्ञानेऽपि तदात्मकत्वाभावात् घटादि ज्ञानासम्भवात् । उपादानज्ञाने तु तदुपादेयज्ञानं सम्भवति, पूर्वं ह्येवं मृत्तिका मया दृष्टा सैवेदानीं घटशरावादि रूपेणैकत्वाध्यवसायेन तयो रेकविज्ञानविषयत्व निश्चयात् । "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्या" दिति दृष्टान्तप्रदर्शनेनाप्येतस्यार्थस्य दृढीकरणाच्च । "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं" इति व्यवहारोपयोगि घटशरावादिनामधेय तन्निमित्तवदवस्थाविशेषभेदे व्यवस्थापितो द्रव्यस्यैकतया तज्ज्ञानस्य लोकसिद्धत्वोपपादनाच्च ।

ननु यद्युपादानोपादेययो रभेदः तथा सर्वविज्ञान प्रतिज्ञानमेवानुपपन्नं, सर्वाभावात्, स्वज्ञाने स्वज्ञानहेतुत्व स्यात्माश्रयेणासम्भवाच्च । अथ पूर्वकालत्वोत्तरकालत्व पिण्डाकारत्व घटाकारत्वजलाहरणाद्युपयोगित्व तदनुपयोगित्व नामभेदादिभिस्तयो र्भेद इष्यते, तथापि तदनुपपत्तिरेव, अन्यज्ञानेनान्यज्ञानासम्भवात् । अतः प्रधानभूते ब्रह्मणि ज्ञाते ज्ञातव्यान्तराभावा दितरस्य ज्ञातप्रायत्वं सर्वविज्ञान प्रतिज्ञाविषय इति युक्त माश्रयितुमिति चेत्? उच्यते, उपादानो-

त्पयती त्युक्तम् । तन्न, "क्रमा दमुं नारद इत्यबोधि स" इत्यादौ व्यभिचारेणोक्तनियमासिद्धेः । गौ रित्ययमाहेत्यादावपि नेति शब्दसामर्थ्या त्प्रतीतिः ; अपितु ब्रूआदेशाहशब्दावगतोच्चारण क्रियासामर्थ्यात । नह्यर्थस्योच्चार्यतासम्भवः । अत एव गौ रिति पश्यति सर्प इति धावती त्यादौ सत्यपि तस्मि न्निति शब्दे नार्थविपयासप्रतिपत्तिः । नवेति विभाषेत्यादौच स्वं रूपं शब्दस्येति नियमादेव शब्दस्वरूपपरत्वे सिद्धे अतिरिच्यमान इतिशब्दस्स्वसंयुक्तपदान्तरस्य स्वार्थप्रच्यावक इत्युक्तम् । इहतु लोकप्रत्यभिज्ञाज्ञापकतया तस्सार्थक्यस्य वक्ष्यमाणत्वा न्नार्थविपर्यासहेतुत्वसम्भवः । नह्यर्थान्तरपरस्य तस्य स्वार्थप्रच्यावकत्वं दृष्ट मिष्टं वा । ज्वलितिकसन्तेभ्यो णइत्यादा वर्थवर्णनात् मृत्तिकेत्येवेत्यत्र कथंचि त्तदुपपादनेपि त्रीणि रूपाणीत्येव सत्य मित्यत्र तदसम्भवाच्च । तथापि दृष्टान्तवाक्यस्थ मृत्पिण्डादिशब्दाना मिति शब्दाद्यभावेन शब्दपरत्वासिद्धेश्चेति यत्किंचिदेतत् ।

यत्तु शुक्त्यादिज्ञाने तदधिष्ठानक रजतादेरिव ब्रह्मज्ञाने तदधिष्ठानकस्य सर्वस्यापि ज्ञातत्वकथनेन ब्रह्मणो विवर्तोपादानत्वमेव सिद्ध्येत, न परिणाम्युपादानत्व मिति । तन्न, मृद्घटादिदृष्टान्त वैघट्यस्यैतन्मतेपि तुल्यत्वात । रज्जुसर्पादिदृष्टान्तोहि तदा वक्तव्यः । अधिष्ठानाज्ञानोपादानकस्य तज्ज्ञाननिवर्त्यस्य चारोप्यस्या प्यधिष्ठानज्ञानेन ज्ञातत्वासम्भवाच्च । एकविज्ञानं तदज्ञानोपादानकं विज्ञानं भवति, यज्ज्ञान निवर्त्यं तदज्ञानोपादानकं भवतीत्यर्थवर्णनन्तु लक्षणादोषा दयुक्तम् । येन ज्ञातेन ज्ञातं भवती त्यत्र पौनरुक्त्यापत्तेश्च । अश्रुतं श्रुतं भवती त्यादा वुक्त गत्यसम्भवाच्च । एवमपि दृष्टान्तवैघट्यापरिहाराच्च । घटादे मृदाद्यज्ञानोपादानकत्वासम्भवात । 'कस्मिन्नु भगवो विज्ञात इदं सर्वं विज्ञातं भवति " " आत्मनि खल्वरे दृष्टे श्रुते मते इदं सर्वं विदितं भवती " त्यादा वज्ञात शब्दाभावेनोक्तार्थासम्भवाच्च ।

यत्तु ब्रह्मज्ञाना त्तत्कार्यभूता चिदंशज्ञानसम्भवेपि तदकार्यभूत चिदंशज्ञानासम्भवा त्सर्वविज्ञानं नोपपद्यत इति केनचि दुक्तम्। तद्विशिष्टस्य विशिष्टं प्रत्येवोपादनत्वस्य वक्ष्यमाणत्वा दुपेक्षणीयम्।

यदपि चेतनस्या परिणामिनः कथं कार्यत्वं, अवस्थान्तर शून्यत्वा दित्युक्तम्। तदपि ज्ञानसंकोचविकासात्मक स्वभाव विकाररूपावस्थान्तरयोगेन कार्यत्वस्य वक्ष्यमाणत्वादेव निरस्तम्।

यदपि तदधीनस्वभावसंकोचविकासमात्रा न्न तज्ज्ञानेन तज्ज्ञानं सम्भवति, स्नेहदशाधीनप्रभासंकोचविकासवतो दीपस्य स्नेह ज्ञाने प्यज्ञाना दित्युक्तम्। तदपहास्यं, प्रागवस्थावतो ज्ञाने भाव्यवस्थावत स्तस्यैव ज्ञानं ह्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविषय तया प्रक्रान्तम्। तच्च स्नेहदीपादौ न सम्भवति, तत्र संकोच विकासात्मक प्रागुत्तरावस्थयो र्द्वयोरपि दीपनिष्ठत्वात्, स्नेहदशयो स्तदवस्थानिमित्तत्वेपि तदन्वयाभावात्। प्रागवस्थावतो दीपस्य ज्ञाना दुत्तरावस्थावतो दीपस्य ज्ञानंतु तत्रापादनीयं, तच्चेष्टापत्त्यैव परिहर्तव्यम्। सिद्धान्तेतु ज्ञानसंकोचात्मक प्रागवस्थावत श्चेतनस्य तद्विकासात्मक भाव्यवस्थाविशिष्टं (तं) प्रत्युपादानत्वा च्चिदचितोः परमात्मशरीरतया तद्गतावस्थाया स्तदपृथक्सिद्धपरमात्म पर्यन्तताया उपपादयिष्यमाणत्वा त्तज्ज्ञानेन तज्ज्ञाने नकश्चि द्विरोधः।

यत्त्वेव मप्यसंकुचितज्ञानस्या नन्तगरुडादे रज्ञाना न्नैकविज्ञानेन सर्वविज्ञानमिति दूषणम्। तदज्ञानात्, "कस्मिन्नु भगवो विज्ञाते इदं सर्वं विज्ञातं भवति" "आत्मनि खल्वरे दृष्टे श्रुते मते इदं सर्वं विदितं भवती" त्यादा विदंशब्दसमभिव्याहारेण कार्यावस्थापन्न प्रपंचज्ञानस्यैव प्रतिज्ञातत्वेन तदनन्तर्गतानन्तगरुडादे रपरिज्ञानेपि दोषाभावात्।

स्या देतत्, प्रागवस्थाविशिष्ट तज्ज्ञाना दुत्तरावस्थाविशिष्ट तज्ज्ञानमित्यस्तु, नैतदेकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविषयः, प्राग-

वस्थाविशिष्ट चिदचिज्ज्ञानेनोत्तरावस्थाविशिष्ट तज्ज्ञानस्य ब्रह्मज्ञानेन कृत्स्नपरिज्ञानान्तर्भूतत्वात् । अत एव न तद्वला द्ब्रह्मण उपादानत्व सिद्धिः, कार्यज्ञान हेतुज्ञानविषयत्वस्य चिदचितो रेवपर्यवसानेन ब्रह्मणि तत्प्रसक्तिगन्धाभावात । ब्रह्मणःवस्थाद्वयासम्भवेनोपादानो पादेयभावासम्भवात । परिणमयमानचिदचित्सम्बन्धमात्रेणोपादानत्वे पारिभाषिकं तदापद्येत । इति ।

अत्रोच्यते । "यस्य पृथिवीशरीरं यस्या व्यक्तं शरीरं यस्यात्मा शरीरं यस्याक्षरं शरीर" मित्यादिभिरुक्तन्यायेन चिदचितो स्ताव द्ब्रह्मशरीरत्वं दुरपह्नवं । शरीरवाचिनश्शब्दाः स्वाद्विशिष्टात्मपर्यन्ता इति "ब्राह्मणोऽग्निमादधीत" "देवदत्तो गच्छति" त्यादि वैदिकलौकिक व्यवहारबला दवगम्यते । कारणवाक्यगताश्च सद्ब्रह्मात्मादि शब्दा-विशिष्टपरा इति "सदेवसोम्येदमग्र आसीत" "ब्रह्म वा इदमग्र आसी" दिति सामानाधिकरण्यान्निर्णीयते । श्वेताश्वतरे "किंकारणं ब्रह्मे" ति प्रश्ने "तेध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्व गुणै र्निगूढा" मिति देवात्मशक्तिरूपाणां ईश्वरजीवा चिद्रूपाणां विशेषणविशेष्यभाव मापन्नानां ब्रह्मशब्दार्थत्व मुच्यते । "भोक्ता भोग्यं प्रेरितारंच मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्मैत" दित्युत्तरेण त-देव स्पष्टीक्रियते । अतएव यतोवेत्यादावपि कारणवाक्यानुसाराद्य यच्छब्दादयो विशिष्टपरा इति विज्ञायन्ते । अतएव उपादानत्व-मपि विशिष्टनिष्ठमवगम्यते । उपादेयत्वमपि स्थूलावस्थ चिदचिद्वि-शिष्टस्यैवेति सामर्थ्यात "किंस्विद्वनंकउसवृक्ष आसी" दिति-प्रश्ने "ब्रह्मवनं ब्रह्म सवृक्ष आसी" दित्युत्तरा दवगम्यते । वनवृक्षशब्द योः स्थूलसूक्ष्मावस्थाद्वयो पलक्षणत्वात । अतएव "तत्तेज ऐक्षत" "ताआप ऐक्षन्त" त्यादौ तेजआदि स्सङ्कल्पश्रवणं तत्तत्कार्योपादान त्वंच वर्ण्यमानं तत्तच्छरीरकब्रह्मपरतया सम्यगुपपद्यते । अन्यथा-तेजः प्रभृते रचेतनस्य बहुभवन सङ्कल्प तदनुगुणकार्यारम्भकत्वयो

त्वयो रयोगात्। अतः प्रागवस्थापन्न द्रव्यविशिष्टं ब्रह्म उत्तरावस्थापन्न द्रव्यविशिष्टं स्वंप्रत्येवोपादान मित्यौपनिषद तात्पर्य मवगम्यते। अतएवच "हन्ताह मिमा स्तिस्रो देवता अनेन जीवेनात्मना नुप्रविश्य नामरूपे व्याकरवाणी" त्यत्र व्याक्रियमाणयो नामरूपयो स्स्वपर्यवसानायैव अनुप्रविश्य व्याकरवाणीति व्याकरणार्थमनुप्रवेशो प्य भिधीयते। अन्यथा पित्रादिव दननुप्रविश्यैव ताटस्थ्येन नामरूपव्याकरणसम्भवा दनुप्रवेशकीर्तन वैयर्थ्यापत्तेः। अतएव "तत्सृष्ट्वा - तदेवानुप्राविशत्, तदनुप्रविश्य सच्चत्यच्चाभवदि" त्यादावनुप्रवेश फलभूत स्त्यद्भावोपि श्रूयते। अतएवच "तदैक्षत बहुस्यां प्रजायेयेति, तदात्मानँ स्वयमकुरुते" त्यादौ स्वात्मनएव बहुरूपतासङ्कल्पः तथाकरणंचश्रूयते। तस्माद्विशिष्टमेव ब्रह्मोपादानमुपादेयं चेत्येक विज्ञानेन सर्वविज्ञानमपि तद्विषयमेवेति।

अथ विशिष्टमिति किं मेतत्- विशेषणविशेष्याभ्यां अतिरिक्तं, तद्रूपंवा? आद्ये न ब्रह्मण उपादानत्वसिद्धिः। अन्त्येत्वचेतनस्येव चेतनयो र्जीवब्रह्मणो रप्युपादानत्वं वक्तव्यम्। विकारवत्कारणत्वं ह्युपादानत्वम्। नह्यपरिणामिनो स्तयो स्स्वरूपविकार स्सम्भवति। यद्यपि ज्ञानसंकोचविकासात्मक स्वभावविकारोजीवे सम्भवति, तथापि न ब्रह्मणि तत्सम्भवः, तस्यासंकुचित ज्ञानत्वात। संकोच विकासात्मकविकारस्य ज्ञानरूपधर्मगतत्वेन धर्मिणि जीवे कथंचिदपि तदसम्भवाच्च। परम्परया विकाराश्रयत्व मादायोपादानत्वे कुलालादेरपि घटाद्युपादानत्वप्रसंगात। एतेन चिदचिद्द्वारा विकाराश्रयत्व मादाय ब्रह्मण उपादानत्वाशापि प्रत्युक्तेति चेत्?

अत्र ब्रूमः -

असत स्सम्भवायोगा त्सदेव प्रागवस्थितम्।
अवस्थान्तरमापन्न मुपादान मिहोच्यते॥

स्वरूपस्या न्यथाभावा दचितः कार्यता यथा ।
स्वभावस्यान्यथा भावा त्तथा चिद्ब्रह्मणोश्च सा ॥

तथाहि – " तद्धैक आहुः, असदेवेदमग्रआसी " दित्यादिना प रपक्षमुपक्षिप्य " कथमसतस्सज्जायेते " त्यसत स्सद्भावनिषेधा दस त स्तावदुत्पत्ति र्न सम्भवति । आहुश्च र्षयः– "सदेवनीयते व्यक्ति मसत स्सम्भवः कुत " इति । अवस्थान्तरापत्ति रेवोत्पत्ति रिति – तैरेवोच्यते – "तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् । आविर्भावति रोभावजन्मनाश विकल्पव " दिति । अभिमतं चैतन्मध्यस्थानामपि । यथाह पतंजलिः – " सुवर्णं कयाचिदा कृत्या युक्तं पिण्डोभवति । पिण्डाकृतिमुपमृद्य रुचकाः क्रियन्ते । रुचकाकृतिमुपमृद्य स्वस्तिकाः क्रियन्ते । पुनरावृत्त स्सुवर्णपिण्डः पुन रपरया आकृत्या खदिरां गार सवर्णे कुण्डले भवतः । आकृतिरन्याचान्याच । द्रव्यं पुन स्त देव । आकृत्युपमर्देन द्रव्य मेवा वशिष्यते । " इति । दृश्यते च तन्त्वा दे स्सत एव पटाद्यात्मना परिणामः । नहि तत्र द्रव्यान्तरोत्पत्तिः, तथा सति द्रव्यान्तर मुत्पाद्य किं तन्त्वादे र्नाशः ? किंवा तेनैव सहावस्थानं ? आद्ये उपादाननाशा त्कार्यनाशप्रसंगः । द्वितीये सहोपलम्भप्रसंगः, परिमाणाधिक्यप्रसंगश्च, कुंकुमपटवासादौ द्रव्यान्तराप्रतिपत्तेरयोगश्चेति प्रपंचितं सारदर्पणे । तथाच प्रळये केवल ब्रह्मपरिशेषे चिदचिदात्मकस्य प्रपंचस्य प्रागसत उत्पत्त्ययोगात चिदचितो रप्यविभक्तनामरूपावस्थापन्नयो स्तदानी मप्यवस्थिति रङ्गीकर्तव्या । तथाच श्वेताश्वतरे श्रूयते–" एकोमनीषी निष्क्रियाणा मेकं बीजं बहुधा यः करोती " ति । अत्र एक इत्यनेन हि सर्व स्वातन्त्र्यं, मनीषीत्यनेन असंकुचितज्ञानतया तत्तद्विचित्रकार्यनिर्माणोपयुक्त तत्तदुपादानगोचरापरोक्षज्ञानवत्त्वं, निष्क्रियाणा मित्यनेन संकुचितज्ञानतया प्राग्व्यवस्थाकालीन करणकळेबरादिप्रयुक्त व्यापार शून्यत्व मभिदधता– चेतनानां स्वभावान्यथाभावात्मक कार्यत्वा द्रत्वं

बहुवचनेन अनौपाधिकबहुत्वं, एकं बीज मित्यनेना चित स्स्वरूपपरिणामोपयोग्येकत्वावस्थापन्नत्वं , बहुधा यः करोतीत्यनेनच बहुस्यामिति संकल्पस्यौपाधिक प्रतिबिम्बादि तुल्यबहुत्वाभिप्रायकत्व व्युदासेन स्वशरीरभूता चिद्द्वारक बहुभावाभिप्रायकत्वं च, व्यवस्थाप्यते । "यस्या व्यक्तं शरीरं यस्याक्षरं शरीर" मिति चाविभक्तावस्थयो श्चिदचितो ब्रह्मशरीरत्वं विशिष्टस्यभाव्यवस्थालक्षणोपादेयत्वोपयोगि प्रागवस्थासम्पत्त्यर्थ मभिधीयते । तत्रच विशेषणीभूतस्या चेतनस्य सूक्ष्मावस्थाप्रहाणेन स्थूलावस्थापत्तिरूप स्वरूपान्यथाभावेन कार्यत्वं । तथाविधस्य चेतनस्यतु नित्यनिरवयवस्य स्वरूपान्यथाभावाभावा त्स्वासाधारण स्वरूपनिरूपक धर्मभूतज्ञान द्वारकान्यथाभावेन कार्यत्वं । संकुचितज्ञानस्य सत स्तस्य तद्विकासापत्तिरेव कार्यत्वम् , मृद्घटो जातः अज्ञो अभिज्ञोजातइति तुल्यव्यवहारात् । नच परम्परया तदाश्रयणे प्रागुक्तातिप्रसंगः, अपृथक्सिद्धि तदभावाभ्यां वैलक्षण्यात् । अपृथक्सिद्धशरीरद्वारकं हि वेदनादिकं शरीरिणि संक्रामति, न पृथक्सिद्ध दण्डकुण्डलादि द्वारकमिति सार्वजनीनमेतत । अतएव शरीरभूतचिदचिद्द्वारकं परमात्मनो प्युपादानत्वं मुख्यमेव । अस्तिच तत्रा प्यवस्थाद्वयं सूक्ष्मचिदचिन्नियमनं स्थूलचिदचिन्नियमनं चेति । अत स्स्वासाधारण धर्मभूत नियमनरूप स्वभावान्यथाभावः परमात्मन्यपि सुलभः । तथाच यथा देवदत्तो यजत ददातीत्यादौ शरीरद्वारकं कायशोषणादिकं तदवयवद्वारकं च मन्त्रोच्चारणादिकं अद्वारकंच संकल्पादिकमादाय देवदत्तादे र्यागकर्तृत्वं तत्फलभोक्तृत्वंच मुख्यम् , यथावा ग्राहकग्रहणेन सन्निधि समाम्नातेषु वस्तुषु परमापूर्वशेषतया वगतेषु यागव्रीह्यादेरद्वारक शेषत्वं प्रोक्षणादेस्सद्वारकशेषत्वं मुख्यमेवावगम्यते, तथा बहुस्यामिति ग्राहकग्रहणेन सर्वा स्ववस्थासु परमात्मीयतया वगतासु स्वरूपान्यथाभाव ज्ञानसंकोचादिरूप सद्वारकावस्थाया स्तन्नियमनरूपा द्वारकावस्थाया श्च परमात्मीयत्वं मुख्यमेव ।

नचैवं युवत्वावस्थायुक्त शरीरविशिष्टमात्मानं प्रति बालत्वा वस्थायुक्त शरीरद्वारकं देवदत्तादे रुपादानत्वं स्यादिति वाच्यम्, इष्टत्वात ; तत्रापि विशिष्टपरिणामानपायात् ।

नचैवं बालाद्युवा जायत इति प्रयोगापत्तिः, मृदोघटोजातइति प्रयोगाव्यतिरेकात । अपादानपंचम्यप्रयोगस्तु तदुत्तरावस्थो त्पत्त्युप योगि प्रागवस्थावद्द्रव्य तत्परिणमयित्रात्मगत व्यापारविशेष काल विशेषापरिज्ञानात् । सत्यपि निमित्ते पुमन्तदेवत पद्माादिशब्दाना-ममरकमलादाविवो पचक्रतेरपेचादीनामिव चाप्रयोगोपपत्तेः । आरोपे हि सति निमित्तानुसरणं नतु निमित्तमस्ती त्यारोपः ।

यस्तु विशिष्टस्य विशिष्टंप्रत्युपादानत्वे चिदचिदीश्वराणां पर-स्परं स्वरूपसांकर्यशंकामंकुरयात । स इत्थं प्रतिबोधनीयः, यथा - शुक्ल कृष्ण रक्त तन्त्वारब्धेपि पट तत्तदंशे तत्तद्रूप भेदभिन्न तन्तूनामेवापादानत्वाश्रयणा न्न शौक्ल्यादिसांकर्यम् ; यथा वा प्रकृति वदतिदेशन युगपदखण्डोपकार पृष्ठभावेन विकृतिं प्राप्तानामपि प्राकृताना मंगानां स्वस्वोत्पत्तिवाक्यस्थ श्रुतिलिंगाद्यवगत कार्यविशेषापरित्यागेनैव विकृतावन्वयः; यथावा हस्तेनावद्यति स्रुवेणावद्यति स्वधितिनावद्यतीत्यत्र श्रुत्यावदानसामान्यसाधनत्वावगताव प्यौचित्या त्पुरोडाशा द्यवदानमात्रान्वयः, तथेहापि विशिष्टस्य विशिष्टोपादानत्वे प्यौचित्याच्चिदंशे चिदंशस्य अचिदंशे चिदंशस्य ब्रह्मांशे ब्रह्मांशस्य चोपादानत्वां गीकारात् न स्वरूपस्वभावसांकर्य-प्रसंगः ।

नचैवं ब्रह्मणो ब्रह्म प्रत्येवोपादानत्वा त्प्रपंचोपादानत्वं न सिद्ध्येदिति वाच्यं, तस्य स्वशरीरभूत सूक्ष्मावस्थ चिदचिद्द्वारा स्थूलावस्थ चिदचिदात्मकप्रपञ्चं प्रत्युपादानत्वात । देवदत्तो गच्छती त्यादौ शरीरद्वारक गमनाद्याश्रयत्वस्य देवदत्तात्मनीव चिदचिद्द्वारका

वस्थाश्रयत्वस्य ब्रह्मण्यपि सुलभत्वात् । नच व्यवधानमात्रादुपादानत्वस्य गौणत्वं, देवदत्तेगंतृत्वस्येव मुख्यत्वोपपत्तेः ।

किञ्च –

कर्मत्व करणत्वादि स्स्वनिष्टेष्वपि वस्तुषु ।
व्यवधानेयथामुख्य स्तथोपादान तेष्यताम् ॥

तथाहि - यद्यपि तावत् " व्रीहीनवहन्ति " " स्रुचस्सम्मार्ष्टि" त्यादावव्यवहितस्यैव व्रीह्यादेः क्रियाकर्मत्वं दृष्टं, इष्टंच तथैवं, अतएव " औदुम्बरीं स्पृष्ट्वोद्गाये " दित्यत्र द्वितीयाश्रुत्यवगतकर्मत्व विरोधे नौदुम्बरी सर्ववेष्टनस्मृत रप्रामाण्यमुक्तं तान्त्रिकैः । तथापि यागेनस्वर्ग कुया दूर्जंपशूनाप्नोती त्यादौ वेदे जलंवहतीत्यादौ लोकेच साक्षात्क्रियान्वयासम्भवा त्तसमर्थापूर्वादिद्वारकं कुम्भादिद्वारकंच कर्मत्वमिष्यते।तथापरशुनाच्छिनत्तिस्फ्येनोद्धन्तीत्यादौ यथानन्तरितेकरणत्वं, तथा काष्ठैः पचति व्रीहिभिर्यजेतेत्यादौ ज्वालापुरोडाशाद्यन्तरितेपि करणत्वं दृश्यते । तथा विप्रायगान्ददाति मैत्रावरुणायदण्डंप्रयच्छतीत्यादा वव्यवहितइव तुभ्यंचैपाकः स्वर्गाय ज्योतिष्टोम इत्यादावोदना पूर्वादिव्यवहितेपि सम्प्रदानत्वं व्यवस्थाप्यते । षष्ठ्यास्तुसाक्षात्परम्परासाधारण्ये न कस्यापि विवादः, दृश्यतेहि देवदत्तस्य कम्बलः इदं ब्राह्मणस्य इत्यादौ साक्षात्सम्बन्धइव - देवदत्तस्यनप्ता वाजपेयस्य यूपइत्यादौ परम्परायामपि षष्ठी । एवमधिकरणत्वमपि कटे आस्ते कपालेषुश्रपयतीत्यादौ अव्यवहितइव - प्रासादेशेते बर्हिषिहवींष्यासादयतीत्यादौ व्यवहितेपिदृश्यते । मुख्यत्वञ्चोभयत्र प्रतिपन्नितान्त्रिकाः । तदुपादानत्वमात्रे कथं नेष्यते । अदर्शनादितिचेन्न;- वृक्षात्पर्णं पततीत्यादावव्यवहितइव आदित्याज्जायतेवृष्टिरित्यादौ व्यवहितेप्युपादानत्वदर्शनात । पुत्रात्प्रमोदाजायत इत्यादावव्यवहितइव दण्डाद्घटो जायत इत्यादौव्यवहिते पौचित्यावर्जिताय निमित्तत्वस्यापरित्यागवत्

सुवर्णात्कुण्डलमित्यादावव्यवहितइव यतोवेत्यादौ व्यवहितेप्यौचित्या-
वर्जितस्य उपादानत्वस्या परिहार्यत्वोपपत्तेः । एवञ्च यतोवेत्यादौ
यच्छब्दस्य विशेष्यमात्रवाचित्वेपि नदोषः, केवलेपि ब्रह्मण्युपादान
त्वस्य चिदचिद्द्वारकस्य निर्व्यूढत्वात् । अतएव "सन्मूलास्सोम्येमा-
स्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठा" इत्यत्र सन्मूला इत्यत्रोपादानत्व
लाभाय सच्छब्दस्य विशिष्टपरत्वे सदायतना इत्यादौ विशेष्यपरत्वेच
वैरूप्यं स्यादित्याशंक्य प्रमाणायत्तस्य वैरूप्यस्यादोषत्वमुद्घाट्य, वि-
शेष्यमात्रपरत्वेपि सद्द्वारकावस्थाश्रयत्वेन ब्रह्मणउपादानत्व मपरिहार्य-
मितिपक्षान्तरमप्युपपादितं तथा तज्जत्वा तल्लत्वा तदनत्वा तन्नियाम्यत्वा
तच्छरीरत्वाच्चेति भाष्यमुपादाय तज्जत्वा तल्लत्वादित्यत्र तच्छब्दस्य
विशिष्टपरत्वे तदनत्वादित्यादौ विशेष्यमात्रपरत्वेच वैरूप्यादुभयत्रापि
विशेष्यमात्रपरत्वमादायापि भाष्यं व्यासाचार्यै रित्थमेवोपपादितं ।
एवमन्यत्रापि द्रष्टव्यमिति नसंकटं किंचिदिति सयूथ्यसम्मतः पन्थाः ।

वस्तुतस्तु प्रागुक्त बहुप्रमाणप्रतिपन्नस्य केनापिप्रमाणेना विप्र-
तिपन्नस्य च विशिष्टपरत्वस्य विनाकारणेन परित्यागायोगात्, आरम्भ
णाधिकरणे सूत्रकार भाष्यकाराभ्या मुपपादितस्य कारणकार्ययो
रनन्यत्वस्यविशिष्टकारणतया विनानिर्वाहायोगात्, महासिद्धान्ते भा
ष्यकारैस्तथैववर्णितत्वात् , यत्प्रयन्त्यभिसंविशन्ती त्यत्रतदवस्थापत्तिरूप
लयस्य विशिष्टपरतामन्तरेणा निर्वाहात्, तत्सहपठिते यतोवेत्यादावपि
तथैववर्णनीयत्वात्, सन्मूलास्सोम्येमा इत्यत्रापि सन्मूलास्सत्प्रतिष्ठा इ
त्याद्यन्तवाक्याभ्यां उक्तन्यायेन विशिष्टपराभ्यां सन्दंशनाभिक्रमण
न्यायेन सदायतना इत्यत्रापि विशिष्टपरत्वेपि "सर्वज्ञस्सर्वगश्शौरि
स्सुन्दरःपुरुषोत्तम" इत्यादौ देवदत्तोगच्छतीत्यादौ जानातितिष्ठति
चेत्यादौच सर्वज्ञत्वसौन्दर्यादे र्गमनज्ञानस्थानादेश्च यथायोगं विशिष्टा
विशिष्टान्वयवदिहापि यथायथमन्वयोपपत्तेः, तज्जत्वादित्यादावपि सर्वं
खल्विदंब्रह्मेति वाक्यसामानाधिकरण्य निर्वाहक हेतुसमर्पक तज्ज-

ज्ञानिति वाक्यव्याख्यानाय प्रवृत्तेर्विशिष्ट परत्वावश्यम्भावात्; "ब- हुगणवतुडतिसंख्ये" त्यत्र संज्ञापरस्यापिसंख्याशब्दस्य "ष्णान्ता- षट्" त्यत्रपदान्तर समभिव्याहारसामर्थ्या त्संज्ञिपरत्ववदिहापि स न्मूलास्तज्जत्वा दित्यादौ विशिष्टपरयोरपि सत्तच्छब्दयो स्सदायतना स्तदनत्वादित्यादौ योग्यतावशा द्विशेष्यमात्रपरत्वेपि बाधकाभावात्। गंगायां मत्स्यघोषावित्यादौ गंगापदस्य "गामग्निंब्राह्मणश्चैव त्रीणि- तेजांसिनस्पृशे" दित्यादौ तेजश्शब्दस्य "द्वेब्रह्मणीवेदितव्ये परं- चैवापरंचे" त्यत्रब्रह्मशब्दस्य "वेदानध्यापयामास महाभारतपंच मानि" त्यादौ वेदशब्दस्यच समभिव्याहृतार्थान्तरान्वयोपपत्त्य नुपपत्तिभ्यां मुख्यामुख्यार्थत्ववदिहापि तज्जलानित्येकस्यापि तच्छब्दस्य विशिष्टाविशिष्टपरत्व वर्णनसम्भवात्; बुद्धिस्थत्वमात्र निमित्तकस्य सर्वनाम्नउभयत्रापि वृत्तौबाधकाभावात्; समानाधिकरण निर्देशा- त्मक पूर्ववाक्यस्थ ब्रह्मशब्दसमानविषयकस्य तज्जलानित्यत्र तच्छ- ब्दस्य विशिष्टपरतयावधृतस्यविनाकारणेन विशेष्यमात्रपरत्व कल्प नस्या न्यायत्वाच्च; कारणवाक्यस्थास्सदादय स्सर्वेविशिष्टाविशिष्ट पराएव प्रत्येतव्या इति भाष्यहृदयारूढः पन्थाः। "अवस्थितेरिति- काशकृत्स्न" इति वदतस्सूत्रकारस्या प्यत्रैवनिर्भरः। अतएव "च राचरव्यपाश्रयस्तुस्या त्तद्व्यपदेशोभाक्त" इत्यवोचत्। अतोविशिष्ट स्यैव कारणत्वात्कार्यत्वाच्च तदभिप्रायक मेक विज्ञानेन सर्वविज्ञान प्रतिज्ञानंयुक्तं। तदाहसूत्रकारः- "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधा' दिति। प्रकृतिश्चोपादानंच निमित्तंच परमपुरुष एव, एकविज्ञानेन सर्वविज्ञान प्रतिज्ञाया मृद्घटादि दृष्टान्तस्यच तदुपादानत्व एवस्वर सत्वादिति तदर्थः। अत्रच प्रतिज्ञा दृष्टान्ताभ्या मित्येववक्तव्ये अनु परोधा दित्यधिकाक्षरप्रवेशः पक्षान्तरेतयोरुपरोध शब्दितास्वारस्य सूचनार्थः। तत्प्रकारस्तु भाष्यादिषुविस्तृतः, दिङ्मात्रंप्रागुदाहृतं।

इदन्त्विह चिन्तनीयम्।

स्वज्ञाना त्सर्वविज्ञान प्रतिज्ञा देशगोचरा।
आनुपूर्वको दिशिश्चाथं शिष्टै रिष्टानुशासने॥

न विशिष्टे तदिष्टंवो नाविशेष्ये न्यदिष्यते ।
तस्मादनुपरोधोक्ति र्भवता प्युपरुद्ध्यते ॥

तथाहि - छान्दोग्ये तावत् " उततमादेश मप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतं भवत्यविज्ञातं विज्ञातं भवती " त्यादेशविषयमेक-विज्ञानेन सर्वविज्ञान प्रतिज्ञान मवगम्यते, यच्छब्देन तच्छब्दस-मभिव्याहृतादेश प्रतिनिर्देशात । आदेशशब्दश्च प्रशास्तृपरः, आङ् पूर्वस्य दिशेः प्रशासने रूढत्वात । आहुश्च वैयाकरणाः - " आङ्पूर्वो दिशिः प्रशासने वर्तते, उपपूर्वस्तु दिशि रुपदेश " इति ।

ननु आदेशशब्दोयं घञन्तः, प्रशासनेच परमात्मा कर्ता, नच कर्तरिघञ् प्रत्ययः, " अकर्तरिच कारके संज्ञाया " मिति कर्तुः पर्युदासात ; नच पचाद्यचानिर्वाहः, इगुपध कप्रत्ययेन बाधात् ; नच - तेनैव निर्वाहः, तस्य कित्वाद्गुणनिषेधेनादेशरूपासिद्धेः; नच भावे घञन्ता दर्शआद्यचानिर्वाह इति केषांचित्कल्पना युक्ता, तथासत्या देशवत्त्व लाभेपि तत्कर्तृत्वालाभेन प्रशास्तृत्वा प्रतिपत्ति प्रसंगात् ; आदिश्यतेनेनेत्यादेश इति भाष्यप्रदर्शित व्युत्पत्ति विरोधापत्तेश्च ; नच तयापि व्युत्पत्त्या, करणे ल्युटो बाधात् ; अतएव कर्तरि करणत्वोपचारेण निर्वाह इत्याशापि प्रत्युक्ता ; सर्वकारकनिर्वाहके कर्तरि करणत्वोपचारस्या पकर्षावहत्वेना युक्तत्वाच्च ; नच बाहुलकेन निर्वाहः, तस्या गतिकगतित्वात् ; इहतूपदेश्यपरत्वेन कर्मणि घञो निर्वाहस्य सुवचत्वेन अगतिकत्वाभावात् ; अतएव अथातो हंकारादेशः अथात आत्मादेशइत्यादौ उपदेशे प्यादेशशब्दः प्र-युज्यते ; अतएवच ' नलुमताङ्गस्ये ' त्यत्र लोपोप्यादेशः; कथमादिश्यते यस्य आदेश इति भाष्येपि तथैवोच्यते; तस्मा दुपदेश्यपरएव आश्रयणीय इति चेत् ?

मैवम् ।

प्रसिद्धयोश्च द्विरुद्धत्वे प्रकृतिप्रत्ययस्थयोः ।
पाशा त्यधिकृतिन्याया त्प्राकृता सा निरुद्ध्यते ॥

तथाहि - आदेशशब्द स्तावन्नोपदेशपरः, "एष आदेश एषउपदेशइति" पृथङ्निर्देशात्; "न वायुक्रिये पृथगुपदेशादि" त्यत्र उपदेशभेदस्यार्थभेदकत्वनिर्णयात् । अतएव नादेशशब्दस्यापि प्रयोगद्वयानुरोधात् उभयपरत्वमपि शंक्यम्, प्रचुरप्रयोगस्यैव तन्निर्णायकत्वात्; गुरुरुपदिशतीति बहुशः प्रयोगाच्च । अतोऽथातो हंकारादेशइत्यादिः क्वाचित्कप्रयोगो लाक्षणिकएव युक्तः । आदिष्टोस्मीत्यादि प्रचुरप्रयोगाच्च प्रशासने मुख्यः । आहच न्यासकारः - "आङ्पूर्वोदिशि नियोक्तृप्रयोजनवचन" इति । प्रशासने परमात्मा कर्तैव, न कर्म, घञ्प्रत्ययस्तु कर्तृव्यतिरिक्त एव कारके नुशिष्टः, अतोत्र प्रकृतिप्रत्यययोर्म्मिति विरोधे न्यतराबाधेन तयो र्विशिष्टैकार्थ वृत्तित्वायोगात् किं केन बाध्यता मिति विशये प्रत्ययस्य प्रकृत्यनुविधायित्वेन तादर्थ्यादंगगुणिविरोधेच तादर्थ्यादिति न्यायेन प्रकृत्यर्थाविरुद्धस्वार्थ प्रवृत्त्यवश्यम्भावात् वेद्योपक्रमाधिकरणन्यायेन अनुपसंजातविरोध प्रकृत्यर्थविरुद्धस्वार्थबोधनासमर्थस्य प्रत्ययस्यैव गुणेत्वन्याय्यकल्पनेतिन्यायेन लाक्षणिकार्थ वृत्तित्वकल्पनस्य न्याय्यत्वात्, "पञ्चपञ्चाशतस्त्रिवृतस्संवत्सरा" इत्यादावहः परत्वस्वरस प्रथमश्रुतत्रिवृतादिपदानुसारेण संवत्सरपदस्याह र्लाक्षणिकत्व वर्णनव त्प्रशासन प्रसिद्धप्रकृति स्वारस्यानुरोधेन प्रत्ययार्थ एवान्यथाकर्तव्यः । दृश्यतेहि 'अदितिः पाशानि' त्यादौ प्रातिपदिकार्थ पाशप्रसिद्ध्यनुरोधेन बहुवचनमवयव बहुत्वपरमितिवर्णनं । तथा "प्राणावावऋषय" इत्यत्रऋषिशब्दानुसारेण बहुवचनस्य गौणार्थवृत्तित्वं " गौण्यसम्भवा त्तत्पाकृतेश्चे " त्यत्रवर्ण्यते । एवं प्रयाजविशेषेण हवींष्यभिघारयतीत्यत्र प्रातिपदिक विशेषशब्द प्रसिद्ध्यवगत प्रतिप्राधान्यत्वानुरोधेन तृतीयार्थो न्यथाक्रियते ।

किंच यथा सक्तून् जुहोतीत्यत्रसक्तूनां होमसंस्कार्यत्वे द्वितीयावगतेपि भूतभाव्युपयोग विधुरस्य संस्कार्यत्वायोगा द्वस्तुसामर्थ्य मनुरुध्यद्वितीयायाः कर्मत्वमपहाय करणत्वे तात्पर्य कल्प्यते, तद्वत्प्र-

शासनगत कर्त्रन्वयसापेक्षत्व सामर्थ्यमालोच्यघञोऽपि तदनुगुणार्थं वृत्तित्वेवश्यंभाविनि कर्तुरेव वाच्यत्वेवक्तव्ये सत्यकर्तरीतिपर्युदाससामर्थ्यात्तद्गतकर्तृत्वाकार परित्यागेनकरणत्वाकार मुपादायघञ् प्रत्ययस्समर्थनीयः । अस्तिह्यनुशासनम्प्रतिब्रह्मणः कर्तृत्वमिव करणत्वमपि, तत्क्रियानिष्पत्त्यनुकूल प्रकृष्टोपकारकत्वात् । अतएव साधकतमंकरणमित्यत्र कैयटेनतस्य सर्वकारक साधारण्यमुक्तं – " यद्व्यापारानन्तरं क्रियानिष्पत्तिस्तदिहकरण " मिति । अतएव कर्तृत्वकरणत्वयोः स्वातन्त्र्या स्वातन्त्र्यघटितमूर्तिकयोः कथमेकत्र वृत्तित्वमिति शंकापरास्ता, करणत्वस्यास्वातन्त्र्य गर्भत्वाभावात् । नचैवं कर्तृकरणयोरिति पृथङ्निर्देश विरोध इति वाच्यं, सामान्यविशेषन्यायेन तदुपपत्तेः । तत्रकर्तृकरण शब्दयोर्भाव प्रधानतया उपधेयसंकरे प्युपाध्यसांकर्येण तथानिर्देशा विरोधाच्च । तथाच यथाकाष्ठंपचति स्थालीपचतीत्यादौ पूर्वापरीभूतानेक व्यापार निचयात्मक पचिक्रियान्तर्गत तण्डुलादिगत विक्लत्यनुकूलव्यापारनिरूपित करणत्वाधिकरणत्वयोः काष्ठस्थाल्यादौ सत्वेपि ' विवक्षातः कारकविभक्तयो नानाभवन्ती' ति वैयाकरणमर्यादा मनुरुध्य तदविवक्षायां काष्ठस्थाल्यादे स्स्वव्यापारनिरूपितं कर्तृत्वमादाय कर्तरि लकार, स्तथेहापि प्रशासनक्रियानिर्वृत्य व्यवहित साधनत्वलक्षण प्रकृष्टोपकारकत्व विवक्षया घञः प्रयोगो नायुक्तः । अस्तिच तथा निर्देशे प्रयोजनं, प्रशासनं हि नियमनं, तच्चान्तःप्रवेशपूर्वकमिति वक्ष्यते , तथाच यथा प्रवेशन जीवेनात्मना नुप्रविश्येति श्रुत्यनुसारा जीवद्वारकतया तत्सापेक्षं, नैव मनुशासनं करणान्तर सापेक्षम् , किन्तु प्रशासनस्य कर्ताकरणंच स्वयमेवेति सूचनाय तथा निर्देशोपपत्तेः । नचैव मादेशशब्देन प्रशासनकरणत्वमेव लभ्येत नप्रशास्तृत्वमिति वाच्यम् , पाराशर्यइत्यादौ गोत्रत्वाविवक्षया प्रत्ययोपपत्तावपि स्वाभाविकानन्तरापत्यत्वापरित्यागेन तत्प्रतीतिवदिहापि स्वाभाविककर्तृत्व प्रतीत्यविरोधात् । इयांस्तु विशेषः, तत्रैकं

स्वाभाविकं अन्यदारोपितं, इहतूभयमपि स्वाभाविकमिति । नच प्रत्ययानभिहितं कर्तृत्वं कथं प्रतीयतामिति वाच्यम्, प्रत्ययस्य कर्तर्यव्युत्पन्नतया शब्दसामर्थ्यात्करणत्वस्य प्रतीतावपि वस्तुसामर्थ्यात्प्रशासनकर्तृत्वस्य प्रतीत्यनपह्नवात् । नियोक्तृप्रयोजनवचन प्रकृतिसामर्थ्यादपि तत्प्रतीत्युपपत्तेश्च । वैवक्षिककरणत्वस्य स्वाविरोधिस्वाभाविक कर्तृत्व प्रतीत्यबाधकत्वाच्च । काष्ठस्थाल्यादावपि हि स्वाभाविकं करणत्वमधिकरणत्वंच प्रतीयतएव । अतएव तत्र केन पचति क्वपचतीत्याकांक्षानुत्थितिः । तस्मा त्प्रत्ययस्वारस्याय करणत्वविवक्षायामपि प्रशासितृत्वप्रतिपत्तौ न कश्चिद्विरोधः । नच करणत्वविवक्षायां परेण ल्युटाबाध शंक्यः, " कृत्यल्युटोबहुळ "मिति बहुळग्रहणेन ल्युडप्रवृत्तौ घञ स्सुलभत्वात् ।

यत्तु विवक्षाया आवश्यकत्वे भावत्वकर्मत्वयोरेव विवक्षास्तु, किंबहुळाद्याश्रयण क्लेशगर्भकरणत्व विवक्षाप्रयासेनेति । तन्न; भावत्वकर्मत्वयो रनुशासनेन अन्वयदौर्घट्या, तथा विवक्षायां प्रयोजनाभावाच्च । करत्वव द्भावत्वकर्मत्वयो रभावेनारोपण कल्पनापत्तेश्च । करणत्वस्यतु स्वाभाविकत्वं तथाभिधानप्रयोजनं च प्रागवोचाम ।

एतेन सर्वकारकनिर्वाहके कर्तरि करणत्वोपचारो राजनिभृत्यत्वोपचारव दपकर्षावहत्वा दयुक्तइति शंकापि प्रत्युक्ता; करणत्वस्यापि तत्र स्वाभाविकत्वा त्तद्विवक्षायाः करणान्तरनिरपेक्षत्व द्योतनेनोत्कर्षावहत्वाच्च । अतएव च क्रियास्वातन्त्र्यलक्षण कर्तृत्वस्यापि प्रतीत्या प्रशासितृत्वो पस्थित्य विरोधाच्च ।

एतेन · यत्केनचि दुक्तम्, दिशि रुच्चारणक्रिय इति भाष्यप्रदीपयो र्बहुशो व्यवहारा दुद्देशनिर्देशादि शब्देषु तथा प्रतिपत्तेश्चादेशशब्दोप्युच्चारण क्रियाविषयपरः, तथाचकर्मण्येवायं घञितिनप्रत्ययास्वारस्यं; यद्यप्युच्चारण क्रियाविषयत्वं शब्द एवस्वरसं, तथापि तद्वारातदीयनिपदे परमा-

त्मन्यपि स्वरसमेव, क्वचिदुपसर्गवशा दन्यार्थप्रतीतावपि तत्राप्युच्चार्यत्वा परित्यागात् ; बर्हिराज्याधिकरणन्यायेन सामान्यशक्त्योपपन्ने विशेषशक्ते रकल्पनीयत्वान्नोभयोरप्यस्वारस्यमिति । तदपि निरस्तम्, उपपादितरीत्या आदेश शब्दस्यप्रशासने सम्प्रदाय प्रसिद्धेर्दुरपह्नवत्वेन रथकारादिशब्द इवयोगार्थस्यानुन्मेषात । केवलस्य दिशेर्दानार्थकतया निराद्युपसर्गोप सृष्टस्यैवोच्चारणार्थकत्वात, "तस्मिन्निति निर्दिष्ट" इत्यादौ कैय्यटादिभि स्तथैव व्याख्यातत्वाच्च । दिशतेर्दाने प्रसिद्धि प्राचुर्याच्च । कथंचिदुच्चा· रणार्थकत्वे प्यादेशशब्दरूपस्य मुख्योच्चार्यत्वासम्भवा द्गौणत्वाश्रयणेच प्रकृत्यस्वारस्यमेव प्राप्नोतीति ततो वरंजघन्यप्रत्यया स्वारस्याश्रयणम् ।

स्थितं तावत्प्रयोगश्शक्तिग्राहकइति । सचार्थानार्थगतत्वेन द्विविधः । तत्र अन्यतरसत्वे सएवनिर्णायकः । तत्राद्यो यववराहादिषु । द्वितीयःपिकनेमादिषु । यत्रतूभयसत्त्वं तत्रार्थप्रसिद्धिप्राबल्या देकत्र मुख्यत्वेनिश्चिते ततोन्यत्रामुख्यत्वं कल्प्यते , यथा-पीलुशब्दस्यार्य प्रसिद्ध्यावृक्षेमुख्यत्वं, गजेत्वनार्यप्रयोगस्य गौणत्वं । यत्रत्वर्थद्वये प्यार्याणामेव प्रयोगः, तत्रयद्युभयत्रापि प्रचुरः प्रयोगः, तदोभयत्रापि मुख्यत्वं ; यथा-नानार्थकेषु सैन्धवादिषु । यत्रत्वन्यतरस्मिन् प्रचुरः प्रयोगः अन्यतरस्मिन्नल्पः, तत्रप्रचुरप्रयोगःशक्तिनिर्णायकः, क्वाचि त्कस्तु प्रयोगोगौणत्वेना प्युपपन्नोनान्यत्रापि शक्तिंकल्पयितुंशक्तः, अ न्याय्यश्चानेकार्थत्वमिति न्यायविरोधात् यथा-सिंहशब्दादेरिति । तदि हाप्यार्य प्रसिद्धिप्राचुर्या दाङ्पूर्वोदिशिः प्रशासनएव रूढोनकाचित्क प्रयोगादुपदेशसाधारणः कल्पयितुंशक्यः । उपदेशातदेशयोरिव आ देशोपदेश शब्दयोरपि विलक्षणप्रयोगेण भिन्नार्थवृत्तित्वस्य प्रागुपपाद नात् । नचात्रपत्युपगमन्यायः; यत्रहि प्रयोगविषये सर्वत्रैकमेव प्र वृत्तिनिमित्त मनुवर्तते तत्रबर्हिराज्याधिकरण न्यायेन सामान्यशक्त्यैवोप पत्तेः प्रसिद्धिगतप्राचुर्यं नशक्त्यन्तर कल्पकंभवति, यथा-पार्थशब्द- स्यार्जुने, यत्रतुप्रवृत्तिनिमित्तं न सर्वप्रयोगेष्वनुवृत्तं, यथा सिंहत्वस्य

शूरे बृहत्त्वस्य प्रकृत्यादौ, तत्रप्रयोगगतप्राचुर्यं शक्तिव्यवस्थापकं, तथाच "पत्नय उपगायन्ती" त्यत्र गीतत्वमात्रनिमित्तस्य गीतिशब्दस्य शारीरा शारीरयोस्साधारणत्वा दशारीरवादित्रगानविषयत्वे प्यमुख्यार्थत्वा भावा त्सन्निहितदुन्दुभ्यादिगानमात्रपरत्व माश्रित्य शारीरकगान गोचर प्रसिद्धप्राचुर्यसत्त्वेपि तस्मिन्ननादरःकृतः ; इहतुप्रशासनत्व रूप प्रवृत्तिनिमित्तस्य सर्वत्राननुवृत्तेः प्रवृत्तिनिमित्तद्वये कल्पनीये सत्य नेकार्थत्वस्य सत्यां गता वन्याय्यत्वा त्प्रयोगगतप्राचुर्याल्पत्व-योश्च मुख्यत्वामुख्यत्वनिर्णायकयोः स्सत्वा त्प्रचुरप्रयोगानुग्रहाय प्र-शासने मुख्यत्वनिश्चये ऐन्द्राग्नादिवत्प्राजापत्यैकधाशब्दादिवच्च मुख्य स्य साधारणत्वाभावे नैन्द्राग्नादि न्यायाविषयत्वा दुपक्रमा द्यधि-करणन्यायेन प्रकृत्यर्थानुरोधेन प्रत्ययार्थो जघन्यएव अन्यथा कर्त व्य इत्युक्तरीत्या करणत्वएव घञ्प्रत्यय इति ॥

वस्तुतस्तु – कर्तरि घञन्तत्वेपि न दोषः, "बहुलं छन्दसी" त्याश्रय णात् । बाहुळ्काश्रयणस्य सिद्धान्तेपि तुल्यत्वात् । अतएव कप्रत्ययेन निर्वाहेपि न दोषः, विधेरिव निषेधस्यापि संज्ञापूर्वकत्वेन अनित्यत्वोपपत्ते श्च । घञन्ता दर्शआद्यचानिर्वाहेपि नदोषः, धनीत्यादौ सामर्थ्या त्स्वा-मित्वादिविशेष प्रतिपत्तिव दिहापि सामर्थ्या देव कर्तृत्वरूप सम्बन्ध विशेष प्रतिपत्तेः। भाष्यन्तु प्रदर्शनमात्रार्थमिति न तद्विरोधइति । विस्तर स्त्वस्मत्कृत नयद्युमणिदीपिकायां द्रष्टव्यः ॥

तदित्थमादेशशब्दः प्रशास्तृपरः । प्रशासनंच केवलस्य परमात्मन एव धर्मो न विशिष्टस्ये त्यादेशविषयक मिद मेकविज्ञानेन सर्वविज्ञानं कथं विशिष्टविषयकमिति ॥

अत्रेदं वक्तव्यं –

अन्तः प्रविश्य शास्तृत्वं श्रुत्यन्तेषु श्रुतं यतः ॥
आदेष्टृत्वं विशिष्टस्य तदिष्टं विशिनष्टिनः ॥

तथाहि - सत्यम् प्रशास्तुर्विज्ञानात्सर्वविज्ञानमिति ; तदेवञ्च - प्रशास्तृत्व मन्तःप्रवेशपूर्वकमिति - "अन्तःप्रविष्टश्शास्ता जनानां" "अन्तःप्रविष्टं कर्तार मेत" मित्यादिभिरवगम्यते । तच्च प्रवेश नं शरीरितयेत्यन्तर्यामि ब्राह्मणा न्निर्णीयते । अन्यथा राजादिवत्तट स्थ्येनैव प्रशासनसम्भवे तदर्थ मनुप्रवेशकथनवैयर्थ्यात् । तदित्थ मादेष्टृत्वं विशिष्टनिष्ठमिति निर्णये सति सर्वविज्ञानप्रतिज्ञानमपि विशिष्टविषयकमिति निश्चीयत इति न कश्चिद्दोषः । एवञ्च "एतस्य वा अक्षरस्य प्रशासने गार्गिद्यावा पृथिव्यौ विधृते तिष्ठत" इत्यादौ यत्रान्तरेण अन्तःप्रवेशनंप्रशासनं प्रतिपाद्यते तत्रापि साम- र्थ्या त्तत्सामान्यन्यायाच्च अन्तःप्रवेशन मभिप्रायविषय मंगीकर्तव्यम् ।

वस्तुतस्तु तत्रापि पृथिव्यादिद्युलोकान्ताना मन्योन्यस्मिन्नोतत्व प्रोतत्ववर्णना त्पृथिव्यादे श्चाचेतनस्य स्वात्ममात्रभरणासमर्थस्य क्षुत्क्षा मभिक्षुकन्यायेन अन्यभरणासामर्थ्या दन्तरेण चेतनाधिष्ठानतां तदस- म्भवा त्तथैव लोके दर्शना त्परमात्मशरीरतापन्नानामेव तेषा मन्यो न्यस्मिन्नोतत्वादिकं कल्पनीयमिति तदन्तर्गत मन्तःप्रवेशनं मनुच्य मानमपि गम्यत इति तत्पूर्वकमेव तत्रापि प्रशासनमिति न तद्वि- रोधः । तदेवोक्तं सूत्रकारेण "अक्षरमम्बरान्तधृतेः" "साच प्रशा सनादि" ति । अत्रच धारणं प्रति प्रशासनस्य हेतुत्वप्रतिपादना तदन्तरेणान्तःप्रवेशनं धारणासिद्धेः शासन मन्तः प्रविश्य नियमन रूपमेव धारणे हेतु रित्यर्थसिद्धं शासनेन्तर्भूतं वेति व्यक्तं प्राचीन निबन्धनेषु ।

इदन्त्विह चिन्तनीयम् ।

न विशिष्टस्य कार्यत्व मिदन्त्वादे रनन्वयात् ।<br>
नाविशिष्टस्य कार्यत्वे ब्रह्मोपादानता भवेत् ॥<br>
केवलस्याविकारित्वा न्नजगत्परिणामिता ।<br>
विशिष्टस्य विकारित्वे केवलस्य न कार्यता ॥

स द्वारकविकारित्वं नोपादानत्वकल्पकम् ।
अन्यथाहि कुलालाद घटोपादानता नकिं ॥
आत्माश्रया न कार्याणां शरीरत्वादिकं यतः ।
आकाशा द्वायु रित्यादौ न विशिष्टे तदिष्टता ॥
सर्वोपादानता तस्मा त्स्मृता सर्वशरीरता ।
सर्वविज्ञान मित्येत त्प्राधान्या द्गौण मिष्यताम् ॥

तथाहि - विशिष्टस्य कारणत्वे कार्यमपि किं विशिष्टमेव, उता विशिष्टं? आद्ये "यतोवा इमानी" त्यादौ प्रत्यक्षप्रतिपन्नानेकविचित्ररचनास्पदत्वबोधकेदंशब्दा दवगतेदन्त्वानुपपत्तिः । विशेषणाभिप्रायकत्वेन कथंचिदुपपत्तिवर्णनेपि बहुवचनावगत बहुत्वानुपपत्तिश्च, विशेष्यस्य ब्रह्मण एकत्वात् । "द्व्येकयो र्द्विवचनैकवचने" "बहुषु बहुवचन" मित्यादे र्नियमार्थत्वात् । नच सुवर्णं कुण्डले भवतः इत्यादिवत्तन्निर्वाहः, तत्र कुण्डलयो रेव विशेष्यत्वात् । नच बाधकबला द्विशेषणान्वयित्वं, सुबर्थस्य विशेष्यमात्रान्वयित्वव्युत्पत्ति भंगापत्तेः । अन्यथा बहुपाककर्तर्येकस्मिन्नपि पचतः पचन्तीति प्रयोगापत्तेः । नचात्र पाशाधिकरणन्यायः, मुख्ये बाधकाभावात । तद्वदत्र प्रमाणान्तरेण प्रातिपदिकार्थस्य प्रसिद्ध्यसिद्धेश्च । नच जात्याख्यया निर्वाहः, अजातिवाचकत्वात; पूज्यतायाश्च यतो येन यदित्यत्र अदृष्टाया इदंशब्दमात्रे उन्मज्जनायोगात् । किञ्चैवं-येन जातानि जीवन्तीत्यस्यानन्वयः, ब्रह्माधीनजीवनत्वस्य विशेषणमात्रगतत्वात् ।

अथाविशिष्टस्यैव कार्यत्व मुच्यते ; तदापि किं विशेषणमात्रस्य , अथ विशेष्यमात्रस्य, अथवा त्रयाणां ? आद्ये न ब्रह्मण उपादानत्वं, सूक्ष्मावस्थापन्नयो श्चिदचितोरेव तदुपादानत्वात् । द्वितीये त्विदन्त्वादे रनुपपत्तिरेव, चिदचितोरपि ब्रह्म प्रत्युपादानत्वापत्त्या अपसिद्धान्तश्च । स्वभावसांकर्यंच । विशिष्टकारणताकल्पन वैयर्थ्यंश्च । अत एव न तृतीयः, त्रयाणां भूतशब्देना

भिधानानुपपत्तेश्च । नहि ब्राह्मणादय शब्दाः केवलात्मनि प्रयुज्यन्ते । किञ्चैवं – त्रयाणा मन्योन्यनिरपेक्षाणा मेव कार्यत्वे कारणत्वमपि तेषां तथैव वर्णनीयमिति कारणबहुत्वापत्तिः । ब्रह्मैककारणत्वासिद्धि रपसिद्धान्तश्च ।

अथ केवलमेव ब्रह्म केवलं चिदचिदात्मकप्रपंचं प्रत्येको- पादान मित्युच्यते? तदयुक्तम्, निर्विकारत्व श्रुतिविरोधात; जीवनित्यत्वा सत्कार्यनिषेध बाधकप्रमाणविरोधाच्च । उपादानसा लक्षण्यादुपादेयस्यप्रपंचस्यानन्दात्मकतापत्तेश्च । उपाधिवशा त्तत्प्र- तिरोधे ब्रह्माज्ञानवादापत्तेश्च । उपादानोपादेययो रभेदेना भेदवाद साम्राज्यापत्तेश्च ।

अथ तस्यैव विशिष्टवेषेणविकारित्व मंगीक्रियतइति चेत्? मैवं, विशेष्यस्वभावविरोधिनो धर्मस्य विशिष्टवेषेण तस्मि न्नसम्भवात । नहि वह्नेरुष्णस्वभावस्य केनापि रूपेणानुष्णत्वं कल्पयितुं शक्यम् ।

किंच किमिदं विशिष्टस्य विकारित्वमिति? विशेषण- विशेष्ययो र्द्वयोश्चेत्? गतं ब्रह्मणो निर्विकारित्वेन । अथ विशेषण- यो रेव चेत? न ब्रह्मणस्तदुपादानत्व सिद्धिः, अवस्थाया श्चिदचिन्मा त्रगतत्वात् । अथ स्थूलावस्थान्तरावस्थानरूपं तत्राप्यवस्थान्तर म- स्तीत्युक्तमिति चेत? सत्यमुक्तं, नतु युक्तमुक्तम्, "तत्सृष्ट्वा तदेवानुप्रा विश" दिति पूर्वकालार्थक क्त्वाप्रत्ययेन सृष्ट्यनन्तरभावित्वेना वग- तानुप्रवेशयुक्त स्थूलान्तर्यामित्वस्य स्थूलावस्थात्मक चिदचिदुत्पत्त्यन- न्तर भाविन स्तदात्मत्वापत्तिकोट्यनन्तगतस्या वस्थान्तरत्वेपि – तस्य कार्यतासम्पादनासामर्थ्यात् । अथ चिदचिद्गताप्यवस्था तद्वा रा परमात्मन्यपि सम्बध्नातीति तस्यापि कार्यत्वं सम्भवतीतिचेत्? तर्हि तथैव तद्गतदोषा अपि संक्रमेयु रिति निरवद्यत्वमपि तस्य न स्यात् । अथ ततएव निरवद्यत्वश्रुतिविरोधा न्न तद्गता दोषाः पर-

मात्मनि प्रादुष्युरितिचेत् ? तर्हि निर्विकारत्वश्रुतिविरोधा च्चिदचिद्गताः परिणामसंकोचविकासादयो न परमात्मनि सम्भवन्तीति तुल्यम् ।

किंच न व्यवहित उपादानत्वं सम्भवति, जनिकर्तुः प्रकृतित्वस्य व्यवहितेऽसम्भवात् । नच प्रकृतिविकारभावः क्वचिद्व्यवहिते-दृष्टः कस्यचिदिष्टोवा, तदात्मना अपरिणतस्य तत्प्रकृतित्वायोगात् । अपरिणतस्यापि तथाविधवस्तुसंसर्गमात्रा दुपादानत्वेतु कुलालादे रपि घटाद्युपादानत्वप्रसंगात् । अथ स्वनिष्ठत्वा स्वनिष्ठत्वाभ्यां वैलक्षण्या द्दोष इत्युक्तमिति चेत् ? तदयुक्तं, मृत्पिण्डगतरूपादे स्तदपृथक्सिद्धस्यापि घटाद्युपादानत्वादर्शनेन व्यभिचारात् । अथ शारीरगतोत्पत्त्यादे श्शरीरिपर्यन्तत्वस्य देवो जातो मनुष्यो जातः सिद्देन भूत्वाबहवो मयात्ता इत्यादौ दर्शनात्सर्वस्यापि ब्रह्मकार्यस्य ब्रह्मशरीरत्वा त्तद्गताप्युत्पत्ति र्ब्रह्मपर्यन्तेति चेत ? तत्रेदं वक्तव्यम्, किमिदानीं विशिष्टस्य कार्यत्व माश्रित्येद मुच्यते, किंवा विशेषणमात्रस्य ? आद्ये ब्रह्मणोपि ब्रह्मशरीरत्वापत्त्यात्माश्रयणम् । द्वितीये कार्योत्पत्त्यनन्तरभावि शरीरत्वावस्थाया स्स्वगतोत्पत्त्याद्यवस्थानां ब्रह्मपर्यंतत्व कल्पनासामर्थ्यात् । किञ्च आकाशा द्वायु रित्यादौ ना काशादय श्शब्दाः परमात्मपर्यन्ताः प्रत्येतुं शक्याः, यस्याकाश श्शरीर मित्यादावपि तथात्वापत्तेः । अत एव सर्वशब्दानां तच्छरीरकपरमात्मपर्यन्तत्वा द्विशिष्टमेव ब्रह्म कारणं कार्यंचेति निरस्तम्, यः पृथिव्यां तिष्ठन्नित्यादौ पृथिव्यादिशब्दानामपि तथात्वापत्त्याऽऽत्माश्रयापत्तेः ; केवलपृथिव्यादे स्तच्छरीरत्वानापत्तेश्च । किंच – अस्तु शरीरवाचिनां शरीरिपर्यन्तत्व मित्याकाशादे श्शब्दस्य परमात्मपर्यन्तत्वं, तथापि कथ मात्मन आकाश स्सम्भूत इत्यादौ विद्यमानाना मात्मादिशब्दानां प्रपंचविशिष्टवाचित्वं? शरीरिवाचकस्य शरीरपर्यन्ततायाः क्वाप्यव्युत्पन्नत्वात् । एवं सद्ब्रह्मादिशब्दानामपि न विशिष्टपरत्वम्, निरतिशय बृहत्त्वादे र्निरुपाधिकसत्ताश्रयत्वादे श्च प्रवृत्तिनिमित्तस्य चिदचितो

रसम्भवाच्च । क्वचि द्विशेषणवाचिना विशेष्यस्याप्यभिधानं क्वचि द्विशेष्यवाचिना विशेषणस्या प्यभिधान मित्यत्र नियामकानुपपन्यासाच्च। अत एव नोपादानतापि प्रामाणिकी, पञ्चम्यादेः कारणत्वमात्रेणा प्युपपत्तेश्च । सामानाधिकरण्यनिर्देशाश्च सर्वव्याप्तया प्युपपद्यन्ते। शरीरत्वव्यपदेशश्च तादधीन्यमात्राद्यभिप्रायको युक्तः, अवाप्तसमस्त कामस्य भोगानायतनपृथिव्यादे र्मुख्यशरीरत्वायोगात् । किञ्चैवं "आकाशादेव सर्वाणि भूतानि समुत्पद्यन्त" इत्यादि ष्वप्याकाशादि शब्दानामपि विशिष्टपरत्वापत्त्या आकाशते आकाशयतीत्यादि व्यु त्पत्तिप्रदर्शनेन परमात्मपर्यन्तत्ववर्णनपराकाशाधिकरणस्थ भाष्यादि विरोध स्स्यात् । अथ परायणत्वाद्यसाधारणधर्माविरोधाय तत्र तथा वर्णने प्यन्यत्र न तथात्वमिति चेत्? कारणत्वस्यापि तदसाधारणधर्मत्वेन अत्रापि विशिष्टपरत्वाभावप्रसंगः । तस्य साधारण्येतु ब्रह्मलक्षणत्वा भावप्रसंगः, असाधारणधर्मस्यैव लक्षणत्वात् । शरीरवाचिनां शरीरिप- र्यन्तत्व मप्ययुक्तं, शरीरादिशब्देष्वेव व्यभिचारात् । निष्कर्षकेतर शब्दानामेव तथात्व मिति चे त्तर्हि पृथिव्यादिशब्दानामपि तदभाव प्रसंगः "यस्य पृथिवीशरीर" मित्यादिषु निष्कर्षकत्वेना भिमतशरीर शब्दसामानाधिकरण्यानिर्देशेन तेषामपि निष्कर्षकशब्दत्वनिश्चयात् । नहि विशिष्टवाचिनां ब्राह्मणादिशब्दानां शरीरादिशब्दै स्सामानाधि करण्यं दृष्ट मिष्टं वा । अथानुप्रविश्य व्याकरणस्य नामरूपयो स्स्व पर्यन्तत्वतात्पर्यकतया सर्वे शब्दा स्तत्परा इत्युक्त मिति चेन्नैवम् , जीवद्वारकानुप्रवेशस्य तदभिधायकशब्दमात्र निर्वाहकत्वेपि पृथिव्या- दिशब्दानां तत्पर्यन्ततां प्रत्यप्रयोजकत्वात् । जीवशब्दस्य सिद्धान्ते तद्विशिष्टब्रह्मपरतया तदात्मतया नुप्रविष्टस्यैव वाच्यत्वनिर्णयेन पृथिव्याद्यननुप्रविष्टस्य वाच्यत्वायोगात् । अथ पृथिव्यादेः जीव द्वारा शरारत्वा त्तच्छब्दवाच्यत्वमिति चेन्न;- महापृथिव्यादे स्तच्छरीर त्वाभावात् । अभिमानिदेवतां प्रति शरीरत्वे मानाभावेन तद्वारापि

तदसम्भवाच्च । जीवाना मणुत्वेन निरवयवत्वेन च अन्तर्देशास-म्भवेन तत्र मुख्यानुप्रवेशाभावेन तद्द्वारापि शरीरत्वायोगाच्च । अनु प्रवेशाभिधाना त्प्रागपि " तत्तेजो सृजते" त्यादौ नामरूपश्रवणेन अनु प्रवेशस्य वाच्यतां प्रत्यप्रयोजकत्वाच्च । एकविज्ञानेन सर्वविज्ञान मपि न युक्तम् , तथासति ब्रह्मविदो मेरुगुहान्तर्गतपदार्थसन्देहाभाव प्रसंगात् । अश्रुतत्वश्रुतत्वयो विरोधेनैकस्मिन्नसम्भवाच्च । अथ कालभेदेन तत्सम्भव इत्युच्यते? तथापि कारणकार्ययो र्भेदेऽन्यज्ञानेन अन्यज्ञानासम्भव एव, तदभेदे च अश्रुतत्वाद्यसम्भवः। अथ कार्यावस्था वैशिष्ट्येनाश्रुतत्वं कारणावस्थावैशिष्ट्येन श्रुतेपि सम्भवतीति चेन्न;- तथासति कारणावस्थाविशिष्टश्रवणेन कार्यावस्थाविशिष्टस्या श्रवणेन इदानीमपि श्रुतत्वाद्यभावात् । स्वरूपेण श्रुतत्वस्य प्रागप्यनपायात् कारणज्ञाना त्कार्यज्ञानस्यैव तत्र विवक्षितत्वेन अवस्थाद्वयस्य कारण कार्यभिन्नस्य श्रुतत्वादिप्रतिपादनानुपपत्तेश्च । अवस्थान्तरापत्ते र्भूमिकादे रिव वैलक्षण्यहेतुतया श्रुतत्वादिविरोधाच्च । तस्मा त्प्राधान्यादिनैव तदुपपादनं कार्य मित्यालूनविशीर्ण मेतद्ब्रह्मण उपादानत्व मिति ।

अत्रोच्यते -

कारणत्वा द्विशिष्टस्य विशिष्टं कार्य मिष्यते ।
तत्रेदन्त्वादिकं सर्वं विशेषणवशा द्भवेत् ॥

तथाहि - कारणस्य ताव द्विशिष्टरूपत्वं श्रुत्यर्थापत्त्यादिभि रुप पादितम् । अतः कार्यमपि विशिष्ट मेवांगीकर्तव्यम् । नचेदन्त्वा द्यनुपपत्तिः, अचिन्त्यानन्त विविध विचित्ररचनास्पदत्वेन प्रपंचस्या सर्वज्ञानिष्पाद्यतया कारणगतसार्वज्ञादिसम्पत्त्युपयोगितया शरीरभूत पृथिव्यादिद्वारकत्वेनेदन्त्वस्या विरुद्धत्वात् । दृश्यतेहि श्यामो युवा लो हिताक्ष इत्यादौ श्यामत्वादि गुण श्शरीरद्वारको देवदत्तादौ । एवं बहु वचननिर्देशोप्यविरुद्धः; पाशानित्यत्रावयवगतसंख्याभिप्रायकत्ववद्विशेषण

भूता चिदंश बहुत्वाभिप्रायेण तदुपपत्तेः । नच तथानिर्देश वैयर्थ्यं, परस्परविजातीयानन्त विचित्रपरिणाम सामर्थ्येन विचित्रशक्तिमत्त्वबोधनार्थत्वेन अवैयर्थ्यात् । असत्कार्यनिरासेन सतएव प्रागेकत्वाव स्थापन्नस्य बहुत्वावस्था प्राप्तिमात्रेण कार्यत्वमिति प्रदर्शनेन सत्कार्य वादप्रतिष्ठापनार्थत्वाच्च । तथाहि - " सदेवसोम्येदमग्र आसीदेकमेवाद्वितीय " मित्यादौ श्रुतमेकत्वं नविशेष्यगतं, तस्येदानीमप्यनपायेन अग्र मात्रेतदभिधान वैफल्यात ; अतएकोव्रीहिरितिवद्विशेषणगतं तद्वाच्यं, तत्रापि नचेतनेषु तदन्वयः, " एकोमनीषी निष्क्रियाणां " "नित्योनित्यानां च्चेतनश्चेतनाना " मित्यादिश्रुतिभिस्तदापि तद्बहुत्वनिश्चयात् । अथेदं शब्देनचेतनाना मनिर्देशात् नतदंशेतद्वयमिति चेत् ? कुतस्तदनिर्देशः? इदं शब्दस्य परागर्थाभिधायित्वात आत्मनांचस्वतः प्रत्यगर्थत्वादितिचेन्न;- प्रत्यगर्थस्यैव सत इदं शब्दसामानाधिकरण्येन तद्वाच्यत्वांगीकारेणतद्वदेव जीवानामपि तत्रनिर्देशोपपत्तेः । अथ ब्रूयात् बहूनामपि जीवानां एकप्रकारकत्वा देकत्वव्यपदेशः, दृश्यतेहि कार्ये सर्वेपिमन्त्रिण एकीभवन्तीत्यादौ बुद्धिरूपप्रकारैक्यादैक्य व्यपदेशइति । प्रतिब्रूयादेनं, प्रकाराणामनेकत्वस्य तदानीमप्याश्रयभेदेनावश्यकत्वात् , एकजातीयत्वे नैक्यस्येदानीमप्यनपायात् , एकविषयकत्वस्य तदाप्यसंभवात् , अचेतनमात्रगतं तद्वाच्यमिति एकाचि च्छरीरकत्वा त्प्रागेकत्वं प्रागेकवचनान्तेन यच्छब्देन प्रदर्श्यतस्यैवाचितो बहुभावेनप्राप्तं बहुत्वमपि दर्शयितु म्बहुवचन निर्देशः क्रियते । दृश्यते ह्येकस्याप्यात्मनः शरीरद्वारकम्बहुत्वं । तद्यथा मुक्तस्य " सएकधा भवति स त्रिधाभवती"त्यादौ । सौभर्यादेश्च शरीर द्वारको बहुभावः पुराणेषु प्रसिद्धः । श्रीमति रामायणेच " तत्र राम सहस्राणी" त्यादौ श्री रामस्य तथात्वं प्रसिद्धम् । अतएव बहुस्यामिति शरीर रूपोपाधिकं बहुत्वं न स्वाभाविकमेकत्व मुपरुणद्धीति दर्शयितु मेकवचनान्त बहुशब्दप्रयोगः । तस्मान्नेदंत्वबहुत्वविरोधा द्विशिष्टकार्यत्वानुपपत्तिः ।

यत्तु निर्विकारत्व श्रुतिविरुद्धं विकारित्वलक्षणं कार्यत्वं न विशिष्टवेषेणापि ब्रह्मणिसंभवती त्युक्तम् ।

तत्रेदं वक्तव्यम्,

अवस्थान्तर संपत्तिस्ततः कार्यत्वमुच्यते ।
चिदचिद्द्वारकं तच्च परस्मिन्नविरुद्ध्यते ॥

तथाहि - प्रागसत उत्पत्त्यसंभवात सतएवावस्थान्तर संपत्तिलक्षणं कार्यत्वमुच्यते । तच्च सद्वारक मद्वारकंचेति द्विविधं । तत्राद्वारकं स्वरूपपरिणामिनो मृदादे रचेतनस्य प्रसिद्धम् । स्वभावपरिणामस्तु सत्यपि घटे पाकेन रूपान्तरसम्बन्धः, चूतफलादौ परिपाकविशेषा द्रसाद्यन्यथाभावश्च । चेतनेष्वपि शरीरद्वारक कार्श्य स्थौल्यबालत्व युवत्वाद्यवस्थान्तर सम्बन्धः प्रसिद्धः । नचैतच्छरीरमात्र गतं, स्थूलोहंकृशोहंबालो युवेत्यादा वात्मपर्यन्ततया मुख्यव्यवहारात् । मुक्तसौभर्यादौ शरीरद्वारक मेकत्वावस्थाप्रहाणेन बहुत्वान्वयित्वंच प्रसिद्धं । तच्चद्वारं स्वनिष्ठमस्वनिष्ठंचेति द्विविधं । तत्रास्वनिष्ठद्वारक मवस्थान्तरंद्वारिणि स्वान्वयादेव मुख्यम्भवति, यथा तेजस्संयुक्तघटादिद्वारकं उदकादेरुष्णत्वा द्यवस्थान्वयित्वं; अन्यथात्वमुख्यं । अतएवलोहित स्फटिकइत्यादे र्भ्रान्तत्वं उष्णंजलमित्यादेः प्रमात्वं । स्वनिष्ठद्वारकंतु विनापिद्वारिणि स्वान्वयं द्वारमात्रे तदन्वयादेव मुख्यम्भवति, यथा देवदत्तादे श्शरीरद्वारकं कार्श्यस्थौल्यबालत्व युवत्वादिकं आत्मनिद्वारिणि असम्बद्धमपि द्वारभूतशरीरमात्रान्वयादेव द्वारिपर्यन्ततया स्थूलोहमित्यादि मुख्यमेव व्यवहारमुपजनयति । नच तत्रस्वभावविरोधः, द्वारिण्यनन्वयात् । नाप्यमुख्यत्वं, यावद्विषयसत्वं नाहंस्थूलइति कदाचि दप्यप्रत्ययात् । " पुमान्नदेवो ननरोनपशुरि" त्यादि स्तु साक्षा द्देवत्वाश्रयत्व भ्रान्तिवारणेन शरीरशरीरिणो र्विवेकाय प्रवृत्तं, नदेवो हमित्यादेरमुख्यत्व साधनायालं । तदिहाप्य पृथक्सिद्धविशेषण चिदचिद्द्वारकमवस्थान्तराश्रयत्वं ब्रह्मणोप्यभाक्तमिति प्रतिपत्तव्यं प्रामाणिकैः । नचैतावता निर्विकारत्वविरोधः, तस्यलोकप्रसिद्ध मृदादितुल्याद्वारक विकारनिषेधकत्वेपि श्रुतिप्रतिपन्नसद्वारक विकारपर्यन्त निषेधकत्वाभावस्य प्रागुपपादितनिर्गुणादि वाक्यस्थलीय न्यायेनार्थसिद्धत्वात् ।

अन्यथा सत्त्वस्त्वाभवादित्यादिना मप्रामाण्यप्रसंगात् । स्थूलान्तर्यामित्वलक्षणावस्थान्तरस्य ब्रह्मण्यपि सुलभत्वाच्च ।

यत्तु सृष्ट्यनन्तर भाव्यनुप्रवेश प्रयुक्तस्थूलान्तर्यामित्वस्य नसृज्यता प्रयोजकत्वमिति । तन्न, अचिद्गत स्वरूपान्यथा भावानन्तर भाविनश्चिद्गतस्वभावान्यथा भावस्यैव तदुभय निष्पत्त्यनन्तरभाविनः स्थूलान्तर्यामित्वस्य स्थूलनिष्पत्त्यनन्तरभाव नैयत्येन तस्य ब्रह्मगतावस्थान्तरापत्तिलक्षण कार्यत्व म्प्रत्यनुकूलतया तदविरोधित्वात् । अनुप्रविश्य व्याकरवाणीति श्रुत्यन्तरानुगुण्याय आस्यं व्यादाय स्वपितीत्यादाविव पूर्वकाले क्त्वाप्रत्यय मङ्गीकृत्य सृष्टेरनुप्रवेशानन्तरभावित्वस्यापिसंभवेन तथाप्यदोषाच्च ।

यत्तु सद्वारकावस्थाव त्सद्वारकदोषाश्रयत्वमपि ब्रह्मणस्स्यादित्युक्तम् । तन्न, यथाहि कारणकार्यस्यापि दण्डादे स्स्वतन्त्रान्वय व्यतिरेकवशा द्घटादिकारणत्वम्, तदभावा त्कुलाल पित्रादे रकारणत्वम्, तद्वदुपादानता ग्राहक प्रमाणबलाच्चिदचि द्वारक मवस्थाश्रयत्वं प्रमाणाभावान्न सद्वारकं दोषाश्रयत्व मपीति ।

यत्तु व्यवहितत्वा न्न जनिकर्तुः प्रकृतित्वं ब्रह्मण इति न तस्योपादानत्वमिति।

तत्रेदं वक्तव्यम् ।

विशिष्टस्यैकवस्तुत्वा दवस्था श्चिदचिद्गताः ।
ब्रह्मण्यपि न दुष्यन्ति पुरुषे युवतादिवत् ॥

तद्यथा शरीरविशिष्टस्या त्मनो देवदत्तादिशब्दवाच्यस्य विशिष्टैकवस्तुत्वा च्छरीरगता अपि युवत्वादयो देवदत्ते मुख्या स्तद्वाच्चिदचिच्छरीरकस्य ब्रह्मणो विशिष्टैकस्वरूपस्यैव कारणत्वा च्चिदचिद्गता अप्यवस्थाः परब्रह्मणि तदेकवस्तुता मापन्ने न विहन्यन्ते ।

तदाहु र्व्याख्यार्याः-" नहि विशेष्यमात्रं कस्यचित्स्वरूपं, विशिष्टस्य हि वस्तुनो विशिष्टमेव स्वरूपं, नहि घटस्य मृण्मात्रं स्वरूपं, अपि तु घटत्वविशिष्टम् । अथ विशेषणस्यापि स्वरूपान्तर्गतत्वे दण्डादय स्संयोगादयश्च स्वरूपं स्यु रिति चेन्नैवम् , याव द्विशेष्यभाविनां अपृथक्सिद्धविशेषणानामेव स्वरूपान्तर्भावात् । किञ्च घटादि वस्तुन उदकाहरणादि तत्तदसाधारणकार्ययोग्यत्वमेव स्वरूपं, न मृण्मात्रं, पिण्डेष्टकादीनामपि घटस्वरूपत्वप्रसंगात् । घटस्यो दकाहरणादि योग्यता नाम निश्छिद्रघटत्वमेव । यस्य वस्तुनो यत्कार्यं यदाकारान्वयव्यतिरेकानुविधायि स आकार स्तस्य वस्तुन स्तत्कार्यं प्रति योग्यता, यथा वह्ने रौष्ण्यं स्फोटजनने, यथा परशो र्नैशित्यं भेदने, यथाच मृदो मृत्त्वं घटाकारपरिणामे श्लक्ष्णार्द्रभावश्च । एव प्रकृतिपुरुषकाला अपि जगद्रूपेण बहुभवने परमात्मनो योग्यतास्थानीया अयुतसिद्धप्रकाराः । अत एव क्वचि च्छक्तिशब्देन जग दभिधीयते । कार्योपयोग्य पृथग्विशेषणं हि शक्तिः । साच योग्यता योग्यवस्तुस्वरूपान्तर्गता । अत श्चिदचिदवस्था स्तच्छरीरकब्रह्म स्वरूपान्तर्गताः । यतो विशिष्टमेव ब्रह्मस्वरूपं, अत एवहि ' त द्यथारेषु नेमि रर्पिता नाभावरा अर्पिता एव मेवैताभूतमात्राः प्रज्ञा मात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिता ' इत्यरनाभिदृष्टान्त उपन्यस्यते । नहि नाभिमात्रं रथचक्रं, किन्तु नाभिवदरनेमी अपि स्वरूपान्तर्गते । तथा ' अंगुष्ठमात्रः पुरुषोन्तरात्मा सदा जनानां हृदये सन्निविष्टः । तं स्वाच्छरीरा त्प्रवृहेन्मुञ्जादिवेषीका धैर्येणे ' ति मुञ्जेषीकादृष्टा न्तश्च श्रुतः । नहीषीकामात्रं मुंजः, किन्तु बाह्यदळविशिष्टेषीकामुंज स्वरूपं, विशेष्यांशस्य दृष्टान्त इषीका । तथा " यथाहि कदळी नान्यात्वक्पत्रान्नाथ जायते । एवं विश्वस्य नान्यस्त्वं त्वंचापीश्वर दृश्यसे । " इति त्वक्पत्रकदळीदृष्टान्तश्च चिदचिद्विशिष्टं ब्रह्मस्वरूप मवगमयति । नहि बाह्यत्वक्पत्रेण विना काण्डमात्रं कदळी, अपितु

त्वक्पत्रविशिष्टकाण्डःस्वरूपम् , एवं विश्वविशिष्टं त्वत्स्वरूपं । तत्र विशेष्यभूत स्वं विशेषणांशा द्विलक्षणश्च दृश्यस इत्यर्थः । इयान् भेदः, नाभिषीकाकाण्डानामरनेमिबाह्यदळत्वक्पत्राणां चाचेतनतया मिथो नियन्तृनियाम्यभावाभावा न्नशरीरशरीरिभावः, अत एव ने-म्यादिशब्दाश्च न विशेष्यवाचकाः, इहतु नियन्तृनियाम्यभावादिना शरीरात्मभावसद्भावा च्छरीरवाचि शब्दाः ब्रह्मपर्यन्ता इति । अतो महदाद्यवस्थानां विशिष्टब्रह्मस्वरूपगतत्वा दुपादानत्वं मुख्य " मिति ।

किंच -

व्यवधानेपि मुख्यत्वं दृष्ट मिष्टं च कारके ।
चिदचिद्व्यवधानेपि तथोपादानतेष्यताम् ॥

तथाहि, माभू च्चिदचितो स्स्वरूपान्तर्भावः, तथाप्युपादानत्वं चिदचिद्द्वारकं मुख्यमेव । नहि व्यवधानमात्रा दमुख्यत्वं, कारका न्तर इव अपादानकारकेपि व्यवधानेपि मुख्यत्वसम्भवात् । दृश्यते हि घटादिकं प्रतिपाणिव्यापारदण्डचक्रादिहेत्वन्तरव्यवहितं कुलालादेः कर्तृत्वम् , तथा " यथा प्रकाशयत्येष कृत्स्नं लोक मिमं रवि " रित्यत्र किरणव्यवहितं रवेः प्रकाशनकर्तृत्वं, जलं वहतीत्यादौ घटा दिव्यवहितं जलादेः कर्मत्वं, " गवा यजेत " " अरुणया क्रीणाती " त्यादौ जातिगुणादे र्यागक्रयसाधनत्वं द्रव्यद्वारकं, यज्ञाय पशव इत्यादौ हृदयादिद्वारकं पशो र्यज्ञतादर्थ्यं, ' आदित्या ज्जायते वृष्टि र्वृष्टे रन्नं ततः प्रजा ' इत्यादा वादित्यादेः किरणमेघादिद्वारक मपादानत्वं, ' इक्ष्वाकूणा मियं भूमि ' रित्यादौ करप्रदातृ राजान्तरा वान्तरस्वातन्त्र्यव्यवहित इक्ष्वाकूणां स्वातन्त्र्यलक्षण स्सम्बन्धः, पर्यंके शेत इत्यादावास्तरणव्यवहितं पर्यंकाद रधिकरणत्व, मिति प्रागेवा वादिष्म । नह्येतत्सर्वममुख्यमिति कस्यापि प्रामाणिकस्यधियमारोहति । तत्कस्यहेतोः ? निर्वाहकव्यवधानस्य मुख्यत्वा विरोधित्वादितिचेत ?

तुल्यमत्रापि, चिदचिद्द्वयवधानस्यापि ब्रह्मनिष्ठोपादानत्वनिर्वाहकत्वात् । अत एव कुलालादे र्घटाद्युपादानत्वशंकापि निरस्ता, मृदादेः कुलालादिगतोपादानत्वानिर्वाहकतया: तथाविधमृदादिव्यवहितस्य निर्वाहकव्यवहितत्वाभावात् ।

ननु जगद्ब्रह्मणोः कुलालमृदोश्च तुल्ये परस्परभेदे, जगतः कथं निर्वाहकत्वं, कथंवानमृदः, नियामकाभावा द्वैपरीत्यस्यापि सुवच त्वाच्चेतिचेन्मैवं ;- स्वनिष्ठत्वास्वनिष्ठत्वाभ्यां वैलक्षण्यस्य प्रागेवो क्तत्वात् ।

ननु नायमस्तिनियमः - यद् पृथक्सिद्धमेव निर्वाहकमिति; पृथक्सिद्धस्यापि घटादे र्जलादिगत कर्मतानिर्वाहकत्वस्य त्वयैवोक्तत्वात् , संस्कारापूर्वादे स्तथाविधस्या नुभवयागादिगत करणतानिर्वाहकत्व दर्शनाच्च । वस्तुतस्तु नायमप्यस्तिनियमः- यन्निर्वाहकमेवा व्यवधायकमिति, आस्तरणादेः पर्यंकादिगताधिकरणत्वा निर्वाहकस्यापि अव्यवधायकत्व दर्शनादिति चेत ?

उच्यते ।

कारकान्तरतुल्यत्वं नोपादानेवकल्प्यते ।
अवस्थान्तरयोगित्वं ह्युपादानत्व मिष्यते ॥
स्वतोवा स्वापृथक्सिद्धद्वारावा यस्तदाश्रयः ।
तदेवस्या दुपादानं कुलालादि रतोनतत् ॥

तथाहि - इदंताव द्विचारणीयं, तुल्येस्वनिष्ठ चक्रकुलालादिव्यवधाने दण्डादे र्यद्घटादि कारणत्वं कुलालपित्रादेस्तु नकारणत्वमिति कुतइदं वैषम्यमिति ।

तत्र यद्युच्येत दण्डादे रन्वयव्यतिरेकाभ्यां घटादिकारणत्वे प्रतिपन्ने तत्रसाक्षात्तस्य तदसम्भवा त्तन्निर्वाहक व्यापारतया कल्प्य

मानं चक्रभ्रमणादिकं यदिस्वव्यवधाना तद्गतकारणत्वमेव व्यावर्तये तर्हि निर्वाहक व्यापारत्वमेव तस्यनस्यात्, अतस्तत्रव्यवधानेपि कार णत्वमेष्टव्यं, कुलालपित्रादेस्तु तथाविधान्वय व्यतिरेकाभावा त्कारण-त्वमेव न प्रतिपन्नमिति कुलालादे र्नैतन्निर्वाहकत्वमिति कुलालादिः स्वजन्यघटादौ स्वपित्रादेः कारणत्वविघटकान्यथा सिद्धिसम्पादकतया व्यवधायक इति ।

अत्रेदं प्रतिवक्तव्यं, तुल्यमुपादानस्थलेपीति । तत्राप्यवस्थान्तरा पत्ति ग्राहक प्रत्यक्षोपादानपञ्च म्युपादेयसामानाधिकरण्यादिभि रु पादानत्वे प्रतिपन्ने तद्यत्रान्तरेण निर्वाहकान्तरं स्वरूपपरिणामेनैव नि र्वोढुंशक्यते नतत्रव्यापारतया किंचिदुपगम्यते, तद्यथामृत्तन्तु सुवर्णादे र्घटपटकटका द्युपादानत्वे । यत्रतु नित्यनिर्विकारित्वादि बाधक प्रबलप्रमाण प्रतिरोधा दनन्यथासिद्धप्रमाणप्रतिपन्न मप्युपादानत्वं न स्वतोनिर्वोढुं शक्यते तत्र तथाविध प्रतिपन्नतत्तदनुगुण परिणति समर्थद्रव्यान्तरं निर्वाहकतया परिकल्प्यते । तच्च तदपृथक्सिद्धमेव, पृथक्सिद्धस्य तन्निर्वहण सामर्थ्याभावात् । अन्यथा पुत्रस्य स्वापृथ क्सिद्ध शरीरद्वारक बालत्वयुवत्वा द्यवस्थान्वयव तदुत्पादकस्य पि तुरपि पुत्रद्वारा तत्तदवस्थान्वय प्रतीत्योः प्रसंगात् । इदंच नित्य निर्विकारस्य परस्य ब्रह्मणो बहुप्रमाणप्रतिपन्न मुपादानत्वं स्वरूपेणा सम्भवा न्निर्वाहकान्तर मपेक्षमाणं तच्छरीरतया तदपृथक्सिद्ध विशेषणत्वेन प्रागुदाहृता नन्यथासिद्ध बहुप्रमाण प्रतिपन्नं चिदचिदा त्मकं जगत्तदुपपादक मुपादाय देवदत्तादे स्स्वापृथग्भूत संघातद्वारक बालत्व युवत्व स्थूलत्व सुन्दरत्वादिव न्मुख्यमेव सम्पद्यते । कुला लादे स्तूपादानता ग्राहकसमानाधिकरण निर्देशाभावा त्पंचमीमात्रस्य प्रतिपन्ननिमित्तत्वमात्रेणा प्युपपत्तेः उपादानता घटकघटत्वा द्यवस्था न्वयस्य प्रत्यक्षबाधितत्वात् मृद्घटोजातः सुवर्ण कुण्डलंजातं बालो युवाजातः सच्चत्यच्चाभव दित्यद्वारकावस्थान्वय ग्राहक समानाधि

करण निर्देशसजातीय निर्देशस्य कुलालघटायोः कदाचिदप्यभावेन अवस्थान्वय कल्पनानौचित्याच्च नमृदादिद्वारकं घटाद्युपादानत्वं ।

यस्तु ब्रह्मप्रपंचयो रुपादानोपादेय भावमात्रसिद्धावपि घट कटकादौ मृत्त्वसुवर्णत्वा द्युपादानतावच्छेदक धर्मान्वयव दिह प्रपंचे तदुपादानतावच्छेदक ब्रह्मत्वान्वया भावात् नतत्प्रयुक्तं सामानाधि करण्य मुपगन्तुं शक्यमिति भ्राम्यति ।

स विशिष्टोपादानोपादेय भावप्रतिपादनपर प्राचीननिबन्धन प्रद र्शनेन कथंचि त्प्रतिबोधनीयः । प्रतिरोधनीयश्च आरम्भणाधिकरण प्रदर्शनेन तदारम्भः ।

जलंवहतीत्यादौचा नम्भः कुम्भवहना त्साम्भःकुंभवहनेप्यधिक श्रमोपलम्भेन केवलसलिलस्य वहनानुपपत्त्याच्च स्वनिष्ठस्यापि कुंभा देर्युक्तं निर्वाहकत्वं, एवमनुभवयागादे रनन्यथा सिद्धान्वय व्यतिरेक श्रुत्याद्यवगतस्मृति स्वर्गसाधनताकस्या शुतरविनाशिनो निर्व्यापार- स्य कालान्तरभावि कार्यजननासामर्थ्येसति तत्सामर्थ्यनिर्वाहकतया तद्व्यापारत्वेन कल्प्यमानमस्वनिष्ठमपि भवत्य व्यवधायकं । आस्तरणादेस्तु पदन्यासासहत्व दर्शनेन स्वनिष्ठाधिकरणत्व- स्यैव पर्यंकादिनिर्वाह्यतया स्वनिष्ठमपि तत्र पर्यंकादेरधिकरणत्वमुपरो- द्धुं शक्नोतीति युक्तमव्यवधायकत्वं । तथाच सर्वत्र निर्वाह्यनिर्वाहक भावसम्बन्धघटको न व्यवधायक इतिव्याप्तौ व्यभिचाराभावादुपादान स्थलेच स्वरूपस्वापृथक्सिद्धविशेषणान्यतरस्यैव स्वोपादानता घट कावस्थान्तरान्वयितावच्छेदकत्वस्य प्रागुक्तातिप्रसंगवारणाय कल्प- नीयत्वात्तत्कल्पकस्यापि चिदचिदपृथक्सिद्धविशेषणतोपपादक पृथिव्या दिशरीरताप्रतिपादकान्तर्यामि ब्राह्मणादे रनन्यथा सिद्धस्य सत्वाच्च न ब्रह्मणउपादानत्वे कश्चिद्विरोधः ।

एतेन-उपादानत्वंहि कारणताविशेषः; कारणत्वंच नव्यवहितस्य संभवति, कुलालपित्रादेः कारणत्वादर्शनात ; किं त्वव्यवहितस्यैव; कारणस्य कार्यदेशकालाव्यवधानव द्रस्वतराव्यवधानस्याप्यपेक्षितत्वात ; अतस्स्वव्यापक कारणत्वव्यावृत्त्या उपादानत्वमपि व्यावर्ततइति कस्यचित्कल्पनमपि परास्तं ।

किंच व्यवधानमपि किमतिप्रसंजकतया प्रतिबन्धकं, उतकारणताविघटनद्वारा ? नाद्यः, अन्वयव्यतिरेकाभ्यामेवाति प्रसंगभंगात् । यदिचैवं नस्यात् अव्यवधानमपि रासभाद्यतिप्रसंजकतया प्रतिबन्धकंस्यात् । द्वितीयेच किं व्यवधानं पूर्वभावित्वं विघटयति, किंवा ऽनन्यथासिद्धत्वं ? नाद्यः, व्यवहितस्यापि पूर्वभावित्वा नपायात । अव्यवहित पूर्वभाव एव तत्रविवक्षित इति चेन्न ; - तस्यसामग्रीत्व घटकत्वेपि कारणत्वा घटकत्वात । अन्यथा वृष्टिनदीपूरादे स्सुभिक्षतादिहेतुत्वं नस्यात् , काष्ठादेः पाकादिकारणत्वंच नस्यात् . कारणत्वाभावे तद्विशेषकरणत्वस्या प्यभावात् । तस्य तद्विघटकत्वंच किं तस्मिन्नुसत्यपि कार्यानुदयात ? किंवा तस्मिन्नसत्यपि कार्योदयात ? उतकार्यान्तर निष्पत्त्यर्थत्वात ? यद्वा व्यवहितकार्यं प्रति किंचित्काराऽयोगात ? व्यवहितत्वादेववा । नाद्यः, अव्यवहितेपि बीजादौसति कदाचिदंकुराद्यनुदयेन बीजादे रप्यंकुराद्यहेतुत्वापत्तेः । कारणान्तर वैकल्यानुदयस्य व्यवहितेपि तुल्यत्वात् । नद्वितीयः, वृष्ट्यादिव्यतिरेकेसुभिक्षत्वाद्य नुदयेन व्यवहितेपि तदभावात । नतृतीयः, कुलालादि शरीराणामपि गमनादिकार्यान्तरार्थतया घटाद्यहेतुत्वप्रसंगात् । नचतुर्थः, कर्तुःकार्यंप्रति करणप्रेरणरूप किंचित्कारवत् काष्ठस्योदनं प्रति ज्वालोत्पादनरूप किंचित्कारवच्च तन्निष्पादककार्य निष्पादनरूप किंचित्कारस्य व्यवहितेपि सम्भवात् । अन्त्ये त त्किमव्यवहित कारणत्वं निरुणद्धि कारणत्वमात्रंवा ? आद्ये इष्टापत्तिः । द्वितीयेनुकारणत्व घटकानन्यथासिद्धत्व पूर्वभावित्वा द्यविघटकत्वेन तस्य तदप्रतिबन्ध

कत्वं प्रागेवोक्तं । अन्यत्र व्यवहितकारणत्वादर्शनात् इहापि तथात्वं कल्प्यत इतिचेत् ? तर्ह्यव्यवहितस्यापि रासभादेरन्यत्र कारणत्वादर्शना दव्यवधानमपि तत्प्रतिबन्धकंस्यादिति यत्किंचिदेतत् ।

तस्मादुक्तरीत्याऽनन्यथासिद्धान्वयव्यतिरेकाभ्यां अव्यवहित इव व्यवहितेपि कारणत्वं दुर्वारमित्युपादानत्वमपि तस्याप्रतिहतमिति ।

एतेना पृथक्सिद्धत्वमात्रा दवस्थाश्रयत्वे मृत्पिण्डगतरूपादेरपि तदपृथक्सिद्धस्य घटत्वाद्यवस्थाश्रयत्वंस्यादिति प्रत्युक्तं, रूपादेः कारणताग्राहकाभावेन तत्रावस्थान्वय कल्पनानौचित्यात् ।

यत्तु विशिष्टस्य कार्यत्वे कार्यमात्रस्य ब्रह्मशरीरत्वांगीकारात् ब्रह्मणोपि ब्रह्मशरीरत्वापत्त्या वात्माश्रय इत्युक्तं । तन्न, यस्य पृथिवी शरीरमित्यादिभिः पृथिव्यादे रेवकार्यस्य शरीरत्वनिश्चयेन ब्रह्मणस्त त्प्रसक्तिगन्धाभावात् । नच पृथिव्यादिशब्दानामपि तच्छरीरक परमात्मपर्यन्तत्वात्तत्राप्यात्माश्रयो दुर्वारइतिवाच्यं, निष्कर्षकेतर शरीरवाचिशब्दानामेव शरीरिपर्यन्तत्वांगीकारेण यस्यपृथिवी शरीर मित्यादिषु निष्कर्षक शरीरशब्द समानाधिकरणतया श्रुतपृथिव्यादि पदानां विशिष्टपरत्वाभावेन आत्माश्रयाप्रसक्तेः ।

किञ्च -

वृत्त्यर्थसूत्रगा वर्णा यथा न ग्राहका स्तथा ।
घटकश्रुतिगा श्शब्दा न विशिष्टाभिधायिनः ॥

तथाहि -

यथा "अणुदित्सवर्णस्य चाप्रत्यय" इत्यकारादे स्सवर्णग्राह कानिर्णयेपि शास्त्रप्रवृत्त्युपयोग्यजादिसंज्ञानिष्पत्तिप्राग्भावि तदर्थवर्ण समवायनिर्देशात्मकेषु अइउणित्यादिषु विद्यमानाना मकारादीनां सव र्णग्राहकत्वं सवर्णग्राहकतावच्छेदकाणत्वाद्यनवगमा दित्युच्यते, यथोक्तं कैयटेन-"स्वरसन्धिस्तु न प्रवर्तते, अजादिसंज्ञाना मनिष्पादा" दिति ।

" अंगेषूपदेशेत्संज्ञाप्रत्याहारसवर्णत्वेषु निष्पन्ने ष्वणुदित्सवर्णस्ये त्येत देवास्यच्चावित्यादिषु प्रवर्तते, नत्वंगेषूपदेशादिषु, नापि स्वात्म नीति " च ; यथा वात्र शब्दकौस्तुभोक्त दूषणोद्धार स्तथा कैयट व्याख्याने विस्तरेणास्माभिः प्रतिपादितं तत्रैवानुसन्धेयम् ; एव मत्राप्युपादानकारणत्वादि प्रत्यायकसमानाधिकरण निर्देशाद्युपयोगि विशिष्टपरत्वप्रयोजक शरीरशरीरिभावप्रतिपादक घटक श्रुतिवाक्य स्थानां पृथिव्यादिशब्दानां शरीरशरीरिभावप्रतिपत्तिप्राग्भावितया न विशिष्टवाचकत्वशंकावकाशः । कारणवाक्यस्थानां तु आकाशादि शब्दानां घटकश्रुत्यवगत शरीरशरीरिभावप्रतिपत्त्युपजीवनेन विशिष्ट वाचित्वे न कश्चि द्विरोध इति ।

यत्त्वेवं सति " आकाशादेव सर्वाणि भूतानि समुत्पद्यन्त " इत्यादाववयवव्युत्पत्त्या ऽऽकाशशब्दस्य परमात्मपरत्वकथनपरभाष्य ग्रन्थविरोध इत्युक्तम् । तन्न, तत्र केवलाकाशशरीरकस्य सर्वभूत कारणत्वाभावेन प्रतिपत्तिलाघवेन च व्युत्पत्त्यन्तरप्रदर्शनेपि विशिष्ट परत्वपक्षप्रतिक्षेपाभावात् । अत एव सर्वत्रप्रसिद्ध्यधिकरणभाष्ये श्रुतकीर्तनानुक्रमणिकायां विशिष्टपरतया प्यनुवादो दृश्यते । एत द्विस्तरस्त्वस्मत्कृतद्युमणिदीपिकायां द्रष्टव्यः ।

यदपि शरीरवाचिनां आकाशादिशब्दानां उक्तरीत्या शरीरि पर्यन्तत्वे व्योमादिशब्दानां शरीरिवाचिनां कथं विशिष्टपर्यन्तत्व मित्युक्तम् । तत्तु स्ववाक्यगतेदंशब्दसामानाधिकरण्या त्सत्कार्य वादसामर्थ्याच्च सदादिशब्दानां विशिष्टपरत्वोपपादनेन प्रागेव परि हृतम् । इयांस्तु विशेषः, यथा त्रिवृत्करणपंचीकरणाभ्यां पृथिव्यादे र्मिश्ररूपतया वस्थानेपि दूरभूयस्त्वात् भूयस्त्वेनोभयश्रुतिन्यायेन पृथि व्यादिशब्दै र्निर्देश, स्तथासृष्टिप्राक्काले सूक्ष्मतापन्नचिदचितो स्संकु- चितस्वभावस्वरूपत्वेन असंकुचितप्रकाशपरमात्मशब्देन निर्देशः,

सृष्ट्युत्तरकालन्तु स्थूलावस्थापन्नचिदचितो रेव प्रत्यक्षोपलम्भेन तद्वाचकेदंशब्देन निर्देश इति ।

यदपि निरतिशयबृहत्त्वादे श्चिदचितो रसत्त्वा न्न तद्विशिष्टस्य ब्रह्मशब्दवाच्यत्व मिति । तदुपहास्यं, प्रवृत्तिनिमित्तस्य घटत्व ब्राह्मणत्वादे र्विशेष्यमात्रवृत्तित्वेपि घटादिशब्दै र्विशिष्टस्यवाच्यत्वदर्शनेन प्रकृते परमात्ममात्रगतं प्रवृत्तिनिमित्त मुपजीव्यविशिष्टस्य वाच्यत्वोपगमे बाधकाभावात् । अत एव कारणत्वस्य ब्रह्मसाधारण्यमपि निर्व्यूढम् । सत्यत्वादे स्स्वरूपलक्षणस्य पृथगभिधानेनैतस्य विशिष्टनिष्ठत्वौचित्याच्च । विशिष्टस्यैव ब्रह्मशब्दार्थतया कारणत्वस्य विशिष्टनिष्ठत्वेपि ब्रह्मासाधारण्यापरित्यागाच्च । समानाधिकरणनिर्देशाश्चैवमेवोपपद्यन्ते । नच सर्वव्याप्तया तन्निर्वाहः, वियदादि ष्वतिप्रसंगात । उक्तरीत्या सर्वेषां ब्रह्मशरीरत्वेन ब्राह्मणोह मित्यादिवन्मुख्यतयैव सामानाधिकरण्योपपत्तेश्च । शरीरताव्यपदेशो गौण इति कल्पना ऽयुक्ता , प्रागुक्तप्रवृत्तिनिमित्तपौष्कल्येन मुख्यत्वस्यैव युक्तत्वात । तथात्वे बाधकाभावात् । तादधीन्यमात्रा त्तच्छरीरत्वे भर्त्रधीनभार्यादावपि भर्तु श्शरीरत्वापातात् । शरीरार्धं स्मृता जायेत्यादिभि स्तस्येष्टत्वे प्रागुक्तश्रुतिभि श्चराचरस्यापि तदिष्यताम् । नचैवं पृथिव्यादिवाचकशब्ददौर्भिक्ष्य मिति वाच्यम् , नीलादिशब्दाना मिवोभयपरत्वोपपत्तेः । शास्त्रदृष्ट्या विशिष्टपरत्वेपि लोकदृष्ट्या विशेषणमात्रपरत्वोपपत्ते श्च ।

एतेन " यस्य पृथिवीशरीर " मित्यादिषु निष्कर्षकशब्दसामानाधिकरण्या त्पृथिव्यादिशब्दानामपि निष्कर्षकतया विशिष्टपरत्वाभावशंकापि प्रत्युक्ता, तत्तेज ऐक्षतेत्यादौ विशिष्टनिर्देशेन यस्य तेज श्शरीर मित्यादौ विशेषणमात्रनिर्देशेन नीलादिशब्दाना मिवोभयरूपताया न्याय्यत्वात । इष्यते ह्यस्य पुण्यं, अस्य पापं, अयं पुरुषः पुण्यो

ऽयं पापः, पुण्यः पुण्येन कर्मणा पापः पापेनेत्यादिषु पुण्यपापादि शब्दाना मुभयरूपत्वम् । दृश्यते च स्थूलं शरीरं स्थूलो ह मित्यादौ स्थूलादिशब्दाना मुभयपरत्वम् ।

किञ्च " अनेन जीवेना त्मना नुप्रविश्य नामरूपे व्याकरवाणी " त्यनुप्रविश्य व्याकरणेन नामरूपयो, स्स्वपर्यन्तत्वावश्यंभावेन पृथिव्यादिरूपाणां तच्छरीरत्ववत् त्पृथिव्यादिशब्दाना मपि तन्नामत्व निश्चयेन तेषां शरीरमात्रपरत्वशंका न युक्तैव । नचैवं देवमनुष्यादि शब्दै र्जीवानां तत्तद्देवादिशरीरकाणां प्रतीति र्न स्यात् , तद्विशिष्टपरमात्मन एव प्रतीति श्च स्या दिति वाच्यम् ; स्वरूपेणैव परमात्मनो नुप्रवेशे वक्तव्ये जीवद्वारकानुप्रवेशकीर्तनसामर्थ्येन तत्त च्छरीरकजीवाना मपि तत्तच्छब्दवाच्यत्वोपपत्तेः । अन्यथा तथाभिधानवैयर्थ्यात् । नचैवं जीवानुप्रविष्टस्यैव वाच्यत्वापत्त्या घटाद्यनुप्रविष्टस्य वाच्यत्वं न स्यादिति शंक्यं, जीवानुप्रवेशकथनस्योक्तरीत्या न्यार्थतया घटाद्यनुप्रविष्टस्य वाच्यत्वाभावसमर्थनपर्यन्त सामर्थ्याभावात् । " तत्सृष्ट्वा तदेवानुप्राविशत्, तदनुप्रविश्य सच्चत्यच्चा भव " दिति चिदचिदात्मक कृत्स्नानुप्रवेशेन कृत्स्ननामरूपभाक्त्वस्य प्रमाणप्रतिपन्नतया तन्निषेधपर्यन्ततात्पर्यकल्पनानौचित्याच्च ।

एतेन महाभूतपृथिव्यादिशब्दानां तत्परत्वाभावशंकापि परास्ता । " यस्य पृथिवी शरीर " मित्यादिशरीरताप्रतिपादकश्रुत्यन्तरप्रतिपन्न तत्तच्छब्दवाच्यताया विना कारणेन परित्यागायोगाच्च ।

यस्तु देवदत्तादिशरीराणां परमात्मशरीरत्वे विवदते, सः " द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । " " समाने वृक्षे पुरुषो निमग्नः " " पुः प्राणिन स्सर्व [ एव ] गुहाशयस्ये " त्यादिभिः परमात्मनो प्यन्तः प्रविश्य नियन्तृत्वेन साक्षा द्वा जीवस्य ब्रह्मशरीरत्वेन कैमुतिकन्यायेन वा सौमनस्यं प्रापणीयः । नचा

नश्च त्वन्यो अभिचाकशीती" ति तत्रा नश्नत एव तस्या वस्थानप्रति पादना त्तद्भोगायतनत्वाभावा त्तच्छरीरत्वं तत्र न युक्त मिति वाच्यं, एवं सति 'स एकधा भवती' त्यादिवाक्यप्रतिपन्न मुक्तशरीराणा मपि तच्छरीरताभावप्रसंगः, "न ह वै देवा अश्नन्ति न पिबन्ती" ति तेषां भोगवत्त्वनिषेधात् ।

एतेना वाप्तसमस्तकामत्वेन भोगासम्भवेन न तस्य पृथिव्यादि शरीरकत्व मिति शंका परास्ता, "सर्वं ह पश्यः पश्यति सर्व माप्नोति सर्वश" इति मुक्तस्यापि तथात्वश्रवणाविशेषात् । "स एकाकी न र मेते" ति स्रष्टुः प्राक्क्रीडाभावश्रवणेन लीलोपकरण तया तत्तच्छरीरपरिग्रहव त्पृथिव्यादिशरीरपरिग्रहोपपत्ते श्च ।

यच्च नित्यनिरवयवजीवान्तःप्रवेशनियमनयो रयोगा त्कथं जीवानां ब्रह्मशरीरत्व मिति । अत्रेदं वक्तव्यं, अय मस्यान्तरः पुरुष इत्यादौ दृढसम्बन्धस्यैवान्तर्यामिरूपतादर्शनेन "य आत्मान मन्तरो यमयती" त्यादावपि तथैव वर्णनसम्भवात । पृथिव्यादा वपि ह्य न्तर्यामि नाम नियमनोपयुक्त दृढसम्बन्ध एव, सर्वव्यापकस्य बाह्य देशपरित्यागेना न्तःप्रवेशायोगात् ।

ननु "जीवेना त्मना नुप्रविश्ये" ति जीवात्मन एवानुप्रवेशा भिधाना "द्व्याकरवाणी" ति परमात्मनः केवलं नामरूपव्याक-रणमात्राभिधानात् कथं परमात्मनो नामरूपभाक्त्व मिति चेन्न;- अनुप्रविश्येति क्रियाद्वयैककर्तृकताबोधकक्त्वाप्रत्ययश्रवणेन अनुप्रवेश व्याकरणयो रेककर्तृकतालाभेन परमात्मन एवानुप्रवेशाभिधानात । एवं तर्हि जीवेना त्मनेति कि मुच्यत इति चेत? शृणु, "तायेन जीवान्" "जीवाजीवे" ष्वित्यादा विव केवलेनैव जीवशब्देन जीवात्मनः प्रतीतिसम्भवे प्यात्मन त्यस्य 'यस्या त्मा शरीर' मित्य-न्तर्यामि ब्राह्मणप्रतिपन्न परमात्मशरीरताप्रतिपत्त्यर्थत्वेन स्वशरीर भूत जीवद्वारकानुप्रवेशन मनेनो च्यते । अतो व्याकरिष्यमाण नामरूपयो र्जीवद्वारा स्वपर्यन्तत्वसिद्धि रिति ।

यत्तु प्रागपि 'त तेजो सृजत' त्यादौ नामरूपश्रवणा त्कथं नामरूप व्याकरणस्या नुप्रवेशपूर्वकत्व मादाय स्वपर्यन्तत्वसिद्धि रित्युक्तम्। तन्न, अमीपिष्टपिण्डा स्सिद्धाः क्रियन्तां सोमयाजी पुत्र स्ते भविष्यतीत्यादाविव अनागतावेक्षणन्यायेन वा " धाता यथा पूर्वमकल्पयदि " त्युक्तरीत्या प्राक्कल्पितनामरूपानुस्मरणेन वा तदुपपत्तेः। अतएवाहमिमा अनुप्रविश्य व्याकरवाणीति वर्तमाननिर्देशोपपत्तिः ।

किञ्च 'असृजत' 'ऐक्षत' 'अकरोदि' ति सर्वत्र भूतनिर्देशेन सृष्टिसंकल्पयोः प्राग्भावश्रवणेन 'तदैक्षत बहुस्यामि' त्युपक्रमावगत स्वपर्यन्तबहुभवन संकल्पोपपादकतया ऽपेक्षितस्य पाठक्रमाद्बलीयसा ऽर्थक्रमेण तत्राप्यन्वयसम्भवान्नोक्तदोषः। करिष्यमाण नामरूप व्याकरणमात्रार्थत्वेच त्रिवृत्करणानन्तरमेव तस्य वक्तव्यत्वा त्ततः पूर्वमभिधानसाफल्यायो भयार्थत्वस्या वर्जनीयत्वाच्चे त्यन्यत्र विस्तरः ।

**एवमेवैकविज्ञानेन सर्वविज्ञानेन तद्दृष्टान्तेनच उपादानत्वमवसीयते।**

यत्तु – ब्रह्मज्ञानात्कृत्स्नज्ञाने ब्रह्मविद स्सर्वज्ञत्वप्रसंगइत्युक्तम् । तत्रेदं वक्तव्यम्, सर्वज्ञत्वप्रसंगइति यदि सर्वगोचरज्ञानवत्त्व मापाद्यते, तदा इष्टापत्तिः । यदिच सर्वगोचरसन्देहाभावः, तदापादकाभावः। तथाहि – कारणकार्ययो रेकद्रव्यत्वात्कारणज्ञाना त्कार्यज्ञानं ह्येकविज्ञानेन सर्वविज्ञानमिति मृद्घटादिदृष्टान्तेन मृत्तिकेत्येव सत्यमिति लोकावगत मृद्द्रव्यैक्य प्रत्यभिज्ञाप्रदर्शनेन चावगम्यते । तत्रच कारणतावच्छेदक मृत्त्वसुवर्णत्वादिरूपेणैव ज्ञान मुपयुज्यते। नहि – तत्र तत्तदसाधारणाकारेणापि ज्ञान मपेक्षितं, येन ब्रह्मविदो मेरुगुहान्तरित वस्त्वसन्देह आपाद्येत। नच द्रव्यैक्ये श्रुतत्वाश्रुतत्वानुपपत्तिः, अवस्थाभेदेन तदुपपत्तेः। नचैवमिदानीमपि श्रुतत्वानुपपत्तिः, भेदानवबोधनात। कार्यस्यहि श्रुतत्वं अश्रुतत्वं चोच्यते, तच्च कारणगत श्रुतत्वाश्रुतत्वप्रयुक्तं स्वारसिकं । तच्च कालभेदेन कारणइव कार्येपि न विरुध्यते ।

ननु श्रवणात्प्रागश्रुतत्वं तदुत्तरं श्रुतत्वंच सर्वसाधारणं, तत्र चात्र विशिष्याभिधाने प्रयोजनं न पश्यामः, नच तावन्मात्रेणोपादानत्व सिद्धिरिति ।

उच्यते -

कार्यकारणयो रैक्यं व्यक्तं तदिदमुच्यते ।
नह्यन्य श्रवणा दन्य दश्रुतं श्रुतमुच्यते ॥

तत्रहि ब्रह्मज्ञानादज्ञातस्यापि जगतो ज्ञान मुपदिश्यते, तच्च जगद्ब्रह्मणो रेकवस्तुत्व मन्तरा नोपपद्यते । न ह्यन्यज्ञाना दन्यस्या ज्ञातत्वं व्युदस्यते, निवर्त्यनिवर्तकयो रेकविषयत्व नियमात् । तयो रेकवस्तुत्वं चोपादानोपादेय भावादेवेति । यद्यपीदं साधारणं, तथापि ब्रह्मणो निमित्तत्वमात्रप्रयुक्त जगद्भेदभ्रमव्युदासाय तदभिधानं युक्तमेव । अतएव मृद्घटदृष्टान्त उपादीयते । अथ स्यात्, पिता पुत्रयो स्सत्येव भेदे तद्गतगोत्रचरणा द्युपदेशा त्तद्गतया प्रागश्रुतेपि पुत्रे श्रुतत्वव्य वहारात् न वस्त्वैक्य प्रत्यायकत्व मेतस्येति । नहया पिता पुत्रयोः परस्परस्वरूपभेदस्य प्रत्यक्षसिद्धत्वेन स्वरूपैक्य प्रत्यभिज्ञाविरहेणच श्रुतत्वादे विशेषणमात्राभिप्रायकत्वात्, इह तु इदं घटशरावादिकं पूर्वाह्णे मृत्तिकैवासीदिति दृढतरप्रत्यभिज्ञादर्शनेन स्वरूपैक्यनिश्चयात् । तदेतच्छ्रुतिरेवाह - " वाचारम्भणं विकारो नामधेयं मृत्तिकेत्ये व सत्य " मिति । वाचेति तृतीयान्तं पृथक्पदम्, " तदनन्यत्व मारम्भणशब्दादिभ्य " इत्यारम्भणशब्दमात्र मुपाददानेन सूत्रकारेण तत्सूचनात् । टाबन्तत्वे एकवचनत्वेच वाचारम्भण शब्दादिभ्य इत्येव ब्रूयात् । तृतीयाचेयं अध्ययनेन वसतीतिव त्फलस्य हेतुत्वविवक्षया । अत स्तृतीयाया श्चतुर्थ्यर्थे लक्षणाभ्रान्तिरपि केषांचिदयुक्ता । आरंभणमित्यत्र " विभ्राजमान स्सरिरस्यमध्या " दित्यत्रेव रलयो रेकत्वेन आलम्भनं स्पर्शनमुच्यते । आलभ्यते अयमिति " कृत्यल्युटो

बहुळ" मिति कर्मणि ल्युट् । विकारो घटत्वाद्यवस्था, नामधेयं-घटादि संज्ञाच स्पृश्यते, मृत्पिण्डेनेत्युपक्रमा न्मृत्तिकेत्युपसंहाराच्च मृद्द्रव्ये णेति सामर्थ्या द्गम्यते; मृदस्ति पात्रं करिष्यामि माता पूज्येत्यादौ मृदुपादानकत्व स्वप्रतियोगिकत्वादिवत् । अत्रच विकारनामधेययोः क्रमभावित्वात् "शेते शुष्यति ताम्यति प्रळपती" त्यादौ क्रियाणामि व विनापि चशब्देन समुच्चयप्रतीतिः ।

एतेन चशब्दस्य मृद्द्रव्येणेत्यस्य च अध्याहारइति केषांचिद्भ्रान्ति रयुक्ता । वाचा- वाक्पूर्वकजलाहरणादि व्यवहारार्थं । अन्नेन वसन्ती- त्यादा वन्नादेः स्वाविनाभूत तृप्त्याद्युन्नायकत्ववत् जलाहरण- स्यापि घटेन जलमाहरेत्यादि वाक्पूर्वकत्वेन वाक्फलतया वाचेत्यनेन तत्कार्यजलाहरणादिक मप्युन्नीयते । अत स्तदंशे लक्षणा भ्रान्ति रपि केषांचि दनुचिता । मृत्तिकेत्येव सत्य मित्यत्रे तिक- रणेन लोकावगत प्रत्यभिज्ञाप्रत्यवमर्शेन धर्म्यैक्यनिश्चया त्तद्दृष्टान्तेन ब्रह्मप्रपंचयो रपि वस्त्वैक्यमेव निर्णीयते ; एतेन सोयं गकार इत्यादौ जात्यैक्या दिवेहापि मृद्घटयो स्सत्यपि भेदे मृत्त्वैक्या देव प्रत्यभिज्ञा किं न स्या दिति शंका परास्ता, प्रत्यक्षेण ग कारयो रिव मृद्घटयो र्भेदेनानुपलम्भात् ।

बुद्धे श्शब्दस्य कार्यस्य कालस्या कृतिसंख्ययोः ।
भेदा त्कारकवैयर्थ्या न्नाशोत्पत्तिप्रतीतितः ॥
कार्यकारणयो र्भेदं ये वदन्ति सदन्तिके ।
अवस्थाभेदत स्तेषा मन्यथात्व मुशन्तु ते ॥
पुमान् यथेह बालत्वा द्यवस्थाभि र्न भिद्यते ।
तथैव कारणा त्कार्यं स्वावस्थाभि र्न भिद्यते ॥

तस्मा देकविज्ञानेन सर्वविज्ञानप्रतिज्ञान मक्षुण्ण मुपादानत्वे प्रमाणम् ।

एतेन मृत्पिण्डादौ पूर्वावस्थोपमर्देनैवो त्तरावस्थादर्शना दिष्ट-कादौ पूर्वावस्थोपमर्दाभावेपि तत्तिरोधानेन भित्त्याद्यवस्थादर्शनाच्च ब्रह्मणि तु तदुभयासम्भवात् कथ मवस्थान्तर मुपादानत्व मिति शंका परास्ता, सूक्ष्मावस्थाप्रहाणेन स्थूलावस्थापत्तिलक्षणकार्यत्वस्य ब्रह्मणि चिदचिद्द्वारा प्रागेवोपपादितत्वात् ।

किञ्च नाय मस्ति नियमः- यत्पूर्वावस्थोपमर्द तत्तिरोधानाभ्या मेवोत्तरावस्थापत्ति रिति । " यथोर्णनाभि स्सृजते गृह्णते च यथा पृथिव्या मोषधय स्सम्भवन्ति । यथा सतः पुरुषा त्केशलोमानि तथा क्षरा त्सम्भवती ह विश्व " मिति श्रुत्यैव ऊर्णनाभ्यादेः पूर्वा वस्थानुपमर्दा तिरोधानाभ्यामेव तन्त्वाद्यवस्थान्तरप्राप्त्या तदुपादानत्व दृष्टान्तेन ब्रह्मणोपि पूर्वावस्था मजहत एव प्रपंचाकारपरिणति रूपावस्थान्तरप्रतिपादनेनो पादानत्वोपपादनात् ।

· · यत्त्वेवं दृष्टान्तानुसरणे मृद्घटोर्णनाभि तन्त्वादे रव्यवधानेना वस्थान्तरापत्तिदर्शना दिहापि साक्षा द्ब्रह्मणः प्रपंचोपादानत्वं वक्त-व्य मिति चिदचिद्द्वारा तदुपादानत्वोपपादनं दृष्टान्तवैषम्या दयुक्त मिति कल्पनम् । तन्न, मृत्तिकेत्येव सत्य मित्यभेदप्रत्यभिज्ञाप्रद-र्शनेन कारणकार्ययो रभेदमात्रव्यवस्थापनेपि तद्व्यवधानाव्यवधानयो स्तत्रोदासीनत्वात् । प्रत्युताभेदप्रत्यभिज्ञाया उपक्रमस्थ सामानाधि करण्यस्य च साक्षा दसम्भवेन विशिष्टरूपेणैवोपादानत्वस्य ताभ्यां समर्थनाच्च । कारणज्ञाना त्कार्यविज्ञानाय दृष्टान्तोपादाने तथैव ब्रह्मणि कृत्स्नज्ञानहेतुभूत ज्ञानविषयत्वमात्रलाभे तस्य वस्त्वभेदाधीन त्वा त्कार्याभिन्न कारणस्यैवोपादानत्वा दर्था दुपादानत्वसिद्धौ तस्य निर्विकारे ब्रह्मणि साक्षा दसम्भवा च्चिदचिद्द्वारकत्वस्य घटकश्रुति साचिव्येन पश्चा त्कल्पनसम्भवाच्च । अन्वयव्यतिरेकाभ्यां दण्डच-क्रयोः कारणत्वसिद्ध्यविशेषेपि व्यवधानाव्यवधानयोः फलबल

कल्प्यत्वदर्शना द्विशिष्टस्य विशिष्टं प्रत्यव्यवहितकारणत्वानपायेन तथा प्यविरोधाच्च । एकविज्ञाना त्सर्वविज्ञानस्य विशिष्टविषयत्वं हि प्रागवोचाम । दृष्टान्तगतैकसर्वशब्दाभ्यां एकत्वबहुत्वावस्थयो रेक निरूत्वबोधना द्विना चैकत्वावस्थोपमर्दं बहुत्वावस्थान्वयायोगात् , ब्रह्मणि चैकत्वस्य कार्यकाले प्यनपायात्, प्रागुक्तरीत्यैकांचि च्छरीरकत्वस्यैवैकत्वावस्थारूपत्वस्य वक्तव्यतया ऽ चिद्गतैकत्वबहुत्वा वस्थान्वय मादायैव दार्ष्टान्तिकस्य निर्वोढव्यत्वाच्च । यथा सोम्यैकया मृदा सर्वं मृण्मयं विज्ञातं स्या दित्येव वक्तव्ये मृत्पिण्डेनेत्यवस्थाविशेषोपादानस्य कार्यगतबहुत्वान्वययोग्यस्थूलावस्थाप्राक्कालीन सूक्ष्मावस्थाप्रदर्शनार्थतया ब्रह्मणि च सर्वव्यापके सूक्ष्मावस्थाया स्स्वरूपेणा सम्भवा च्चिदचिदात्मकशरीरविशिष्टवेषेणैव वाच्यतया विशिष्टोपादानत्व एव पर्यवसानाच्च । एत त्सर्व मभिसन्धाया सूत्रय द्भगवां त्सूत्रकारः " दृष्टान्तानुपरोधा " दिति ।

तथा " कर्तार मीशं पुरुषं ब्रह्मयोनि " मिति कर्तृयोनिशब्दाभ्यां निमित्तत्वोपादानत्वयोः कण्ठतः प्रतिपादनादपि ब्रह्मण उपादानत्व मवर्जनीयम् । नचात्र शास्त्रयोनित्वा दित्यादा विव कारणत्वमात्रपरो योनिशब्द श्शंक्यः, कर्तार मित्यनेन पौनरुक्त्यापत्तेः । " यथोर्णनाभि स्सृजते गृह्णते च " त्यादिवाक्यशेषगतोर्णनाभ्यादि दृष्टान्तानुरोधेन " सन्दिग्धे तु वाक्यशेषा " दित्यधिकरणन्यायेन योनिशब्दस्योपादानपरत्वनिश्चयाच्च ।

किञ्च " योनिश्च हि गीयते " इति हिशब्दं प्रयुञ्जानस्य सूत्रकारस्य योनिशब्द उपादाने प्रसिद्ध इत्यभिप्रायोवगम्यते, प्रयोगप्रसिद्धिश्च मुख्यार्थतां गमयतीति सार्वजनीन मित्यसतिबाधके सएवार्थो गम्यत इति शास्त्रयोनित्वा दित्यत्र बाधकबलात्तत्त्यागेपि न सर्वत्र तत्त्यागः; अतिप्रसंगात । तथाहि कारणत्वंहि द्विविधं -ज्ञप्तिद्वारकमुत्पत्तिद्वारकं चेति । शास्त्रस्य विषयानुत्पादकत्वा त्तत्रावश्यं ज्ञप्तिद्वारकमेव कारण

त्वं वाच्यं । नच तथाविधकारणे उपादानत्व योग्यतास्तीति मुख्या र्था सम्भवा त्कारणत्वमात्रार्थकत्व मस्तु । ब्रह्मणस्तु प्रमेयोत्पादकतया मुख्यार्थसम्भवेपि नतत्यागोयुक्तः ।

अथस्यात, " अप्सुयोनिर्वा अश्वः " " यजमानोवा अग्नेर्योनिः " इत्यादा वनुपादाने बहुळं प्रयोगात्कथमुपादाने मुख्यत्व निश्चय इति । नस्यात, यववराहाधिकरणन्यायेन उदाहृतवाक्यशेषानुगुण प्रसिद्धिमनु-रुद्ध्योपादाने मुख्यत्व निश्चयसम्भवात । दृश्यतेहि " बृहत्पृष्ठंभवति सप्तदशानि पृष्ठानि " त्यादौ महेन्द्र तदितरस्तोत्रेषु पृष्ठशब्दप्रयोग साम्येपि " अपोवा ऋत्विज मार्छेन् तासांवायुः पृष्ठेव्यवर्तत " त्यादि वाक्यशेषेण महेन्द्रस्तोत्रे मुख्यत्व मन्यत्रचा मुख्यत्वमितिनिर्णयः । एत देवाभिप्रेत्यभाष्ये वाक्यशेषान्निर्णयोभिधीयते । तस्मा द्योनित्वनिर्देशा च्चोपादानत्वं ।

एव मन्यान्यपि वाक्यान्युपादानतामेव प्रथयन्ति ।

अत्रेदं तत्वं, कारणवाक्यानि सर्वाण्यप्युपादानपराण्येव, " स देवसोम्येदमग्र आसीत " " आत्मावा इदमेक एवाग्र आसी " दित्या दिषु इदंशब्दसामानाधिकरण्यैकत्वावधारणाभ्यां प्रागुक्तक्रमेणोपादा नत्वनिश्चयात । " तमोवा इदमेकमास तत्परेणेरितं विषमत्वं प्रयाति " त्यादिव्यधिकरणनिर्देशेष्वपि तमश्शब्दः परमात्मशरीरतापन्नतमः पर इति "पृथिव्यप्सु प्रलीयत " इत्यादिनोत्तरोत्तरकार्यवर्गस्य पूर्वस्मिन् पू-र्वस्मिन् लयप्रतिपादनानन्तरं "तमःपरे देव एकी " भवतीत्येकतापत्त्यभि धाना च्चावगम्यते । अन्यथा स्वप्रकाशात्मके परस्मिन् तमस एकी भावासम्भवात । एकीभाव श्चाविभक्तनामरूपतापत्तिः । "तस्मा त्तम स्संजायत " इत्यादौ विभक्तनामरूपतापत्ति रेव संजननं. नतु प्रा गसत उत्पत्तिः, असत्कार्यासम्भवस्य प्रा गुपपादनात । " प्रजाप-ति रेको ग्रे तिष्ठत " " हिरण्यगर्भ स्समवर्तताग्रे भूतस्य जातः पति

रेक आसीत् " इत्यादिषु सामानाधिकरण्यप्रतीत्यभावे प्येकत्वावस्था वधारणादेवोपादानपरत्वं निश्चीयते. एकाचिच्छरीरकत्वार्थता मन्त रेणैकत्वाभिधानवैयर्थ्यस्य प्रागुपपादनात् । " इन्द्रो मायाभिः पुरु रूपईयत " इत्यत्रापि मायाशब्दित तत्तत्कार्यानुगुण संकल्पानुसारेण बहुरूपताभिधाना त्तस्याश्च बहुत्वावस्थान्वययोग्या चिच्छरीरकत्व मन्तरेणा सम्भवा च्छरीरद्वारक बहुभवना दुपादानत्व मवसीयते ।

एतदेव स्पष्टीकृतं मनुना –

" आसी दिदं तमो भूत मप्रज्ञात मलक्षणम् ।
अप्रतर्क्य मविज्ञेयं प्रसुप्त मिव सर्वतः ॥
तत स्स्वयंभू र्भगवा नव्यक्तो व्यञ्जय न्निदम् ।
महाभूतादिवृत्तौजाः प्रादुरासी त्तमोनुदः ॥
यो सा वतीन्द्रियग्राह्य स्सूक्ष्मोव्यक्त स्सनातनः ।
सर्वभूतमयो चिन्त्यः स्स एष स्वय मुद्बभौ ॥
सोभिध्या यशरीरात्स्वा त्सिसृक्षु र्विविधाः प्रजाः ।

इत्यादिना ।

अत्र तमसो ब्रह्मशरीरत्वं तस्य च सृष्टेः प्रा गविभक्तावस्था पत्तिः पश्चाच्च शरीरिभूतपरमात्मप्रकरणतया तत्संकल्पानुगुण बहु भाव स्तमस श्शरीरत्वेन तद्गतबहुभावस्य स्वपर्यन्तत्वंच स्पष्टमवगम्यते ।

एव मन्यान्यपि कारणवाक्यानि सर्वशाखाप्रत्ययन्यायेन सर्ववेदा न्तप्रत्ययन्यायेनच उपादानपराण्युन्नीयन्ते । " यस्य पृथिवीशरीर " मित्यादीनामपि बहुत्वावस्थापत्ते स्स्वपर्यन्तता सिद्ध्युपयोगितया तद र्थत्वं दुरपह्नवं ।

भेदश्रुतयोपि शरीरशरीरिभावोपयोग्य विशिष्टस्वरूपगत भेदप्रति पादकतया तदर्थाः । अतएव भेदे सत्युपादानो पादेयभावो नसम्भवतीति अभेदेच शरीरशरीरिभावो नसम्भवतीति विप्रतिषेध

भ्रमः केषांचिन्निरस्तः, भेदस्य विशेषणविशेष्योभयगतत्वात्, उपादानोपादेयभावस्य विशिष्टगतत्वात् ।

एव मभेदश्रुतयोपि शरीरशरीरिभावो पादानोपादेयभाव प्रतिपत्ति फल निर्देशरूपतया तदर्थाएवेति सर्वमपि वेदान्तवाक्यजातं उपादानप्रतिपत्तावेवो पयुज्यते, तत्प्रतिपत्तिस्तु "कारणन्तु ध्येय" इत्युक्त ध्यानप्रतिपत्तौ, तच्च ध्यानं साक्षात्कारद्वारा मुक्तिफलार्थमिति युक्तमुक्तं ब्रह्मणो ऽभिन्ननिमित्तोपादानत्वमिति ।

किंच सर्ववेदान्तसारभूत सद्विद्यायां षड्विधतात्पर्यलिंगान्यभिन्न निमित्तोपादानताध्यवसायकानि दृश्यन्ते । तथाहि – "येनाश्रुतंश्रुतं भवती"त्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञानेन "मृत्तिके त्येवसत्य" मित्यभेदप्रतिज्ञाया दृष्टान्तगताया दार्ष्टान्तिकेपि प्रदर्शनपुरस्सरं "सदेवसोम्येदमग्रआसी" दित्युपादानताप्रयोजक सत्त्वैकत्वनिमित्तान्तर राहित्यात्मकां द्वितीयत्व कार्याभेदनिर्देशादिभि श्चोपक्रमः । "तत्वमसिश्वेतकेतो" इति समानाधिकरण निर्देशेनोपसंहारः । तत्रैवाभ्यासः । अस्यार्थस्य मानान्तरागोचरत्वलक्षण मपूर्वत्वं "भूयएव मा भगवान्विज्ञापयत्वि" ति पुनःपुनः प्रश्नादवगम्यते । फलंच "तस्यतावदेव चिरंयावन्नविमोक्ष्ये अथसम्पत्स्य" इत्युपादानध्यानादुच्यते । "कारणन्तु ध्येय" इत्यन्यत्र तस्यैवध्येयतावच्छेदकत्वोक्तेः आख्यायिकाचार्थवादः। मृत्पिण्डादि दृष्टान्तप्रदर्शनादि रुपपत्तिः । इत्येवं षड्विधतात्पर्य लिंगवत्या सद्विद्ययो पादानत्वे निश्चिते तदनुसारेण वाक्यान्तराण्यपि तत्पराण्यवसीयन्ते ।

नच सद्विद्यायां "तत्तेजोसृजते" त्यादौ केवलतेजः प्रभृते रुत्पत्ति प्रतिपादना द्विशिष्टसृष्टिविच्छेदा न्नोपादानपरत्व सम्भवतीति वाच्यम्, "तदैक्षत बहुस्या"मिति पूर्ववाक्यसंप्रतिपन्नस्य स्वात्मनो बहुभवन संकल्पस्याविरोधाय तेजश्शब्दस्यापि तच्छरीरक परमात्मपर्यन्तत्वौचित्यात् ।

अन्यथा "तत्तेजऐक्षत" इत्युत्तरवाक्ये तेजश्शब्दगते क्षणश्रवणविरोधात् । नचात्राभिमानि व्यपदेशोन्याय्यः, अभिमानिनो जगद्व्यापारानुगुण संकल्पायोगात् । अन्यथा " जगद्व्यापारवर्ज" मिति सूत्रविरोधात् । अत एव तत्र संकल्पश्रुते रमुख्यत्वशंका प्ययुक्ता, विशिष्टपरत्वेन मुख्यत्वसम्भवात् । तदाह सूत्रकारः - " गौण श्चेन्नात्मशब्दा " दिति । तथाच नाम श्रीमद्भाष्यम् - " तेजः प्रभृतयोपि शब्दाः परमात्मन एव वाचकाः, 'तत्तेज ऐक्षत ता आप ऐक्षन्ते' " तिच मुख्यमेवेक्षण " मिति । तथा " तदभिध्यानादेव तु तल्लिगा त्स " इत्यत्र "तत्तेज ऐक्षत ता आप ऐक्षन्तेति श्रूयमाण मीक्षणं तत्तच्छरीरकस्य परस्यैव ब्रह्मण " इति । संज्ञामूर्तिक्लृप्त्यधिकरणेच " तेज श्शब्देन तेज श्शरीरकं ब्रह्मैवाभिधीयत " इति भाषितम् । तस्मा न्न विशिष्टपरत्व विच्छेदः । " सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति तस्मा देनं स्वपितीत्या चक्षते स्वं ह्यपीतो भवती " ति जीवस्य सच्छब्दवाच्ये ब्रह्मणि लयप्रतिपादना च्चेतनोपादनत्वमपि तत्र दृढीक्रियते । एव मन्यदपि द्रष्टव्यम् । एवंच षड्विधतात्पर्यलिंगप्रतिपन्नाभिन्ननिमित्तो पादानकतया सद्वितीयैकरूप्यसम्पत्तये कारणवादयानां सर्वेषा मु-पादाननिमित्तत्वोभयपरत्व मावश्यकम् ।

एवं श्रुतिलिंगादिभिः प्रमाणै रप्युपादानत्वं निश्चीयते । तथाहि- श्रुति स्ताव द्विविधा, प्रातिपदिकश्रुतिः प्रत्ययश्रुति श्चेति । तत्र " कर्तार मीशं पुरुषं ब्रह्मयोनि " " यद्भूतयोनिं परिपश्यन्ति धीराः " " एतद्योनीनि भूतानि " " प्रकृति श्च प्रतिज्ञा दृष्टान्तानुपरोधात् " " परिणामात् " " योनिश्च हि गीयते " इत्यादि श्रुतिस्मृतिसूत्रगता-योन्यादय श्शब्दाः प्रातिपदिकश्रुतयः । " यतो वा इमानि भूतानि जायन्त " इति पंचमीविभक्तिः प्रत्ययश्रुतिः । लिंगं शब्दगत मर्थ गतं चेति द्विविधं । तत्र " सदेवसोम्ये दमग्र आसी देकमेवाद्वि-तीय " मिति कार्यकारणाभेदबोधकत्वलक्षणं समानाधिकरणपदद्वयनिष्ठं

सामर्थ्यं, एकपदनिष्ठं एकाचिच्छरीरकात्मबोधनसामर्थ्यं, बहुस्यामिति बहुशब्दगतं बहुत्वावस्थापन्ना चिच्छरीरकात्व प्रतिपादनसामर्थ्यं, बोधपादिकं शब्दगतम् । अर्थगतञ्च " तदैक्षत बहुस्यां प्रजायेय " " यत्प्रयन्त्यभिसंविशन्ति " " स्वं ह्यपीतो भवति " आत्मनि खल्वरे दृष्टे श्रुते मते इदं सर्वं विदितं भवति । " " एषत आत्मान्तर्याम्यमृतः " " यस्य पृथिवी शरीरं " " यस्यात्मा शरीरं " " अनुप्रविश्य नामरूपे व्याकरवाणी" त्यादिश्रुतिप्रतिपन्नसर्वज्ञत्व सर्वशक्तित्व सर्वरूपाधिष्ठानात्व सर्वज्ञानहेतुज्ञानविषयत्व सर्वान्तर्यामित्वसर्वशरीरत्वसर्वानुप्रवेशसर्वनामरूपव्याकरण सत्यद्भावादि लक्षणं वस्तुसामर्थ्यं। वाक्यंच समानाधिकरणं व्यधिकरणं चेति द्विविधं। तत्र " तत्त्वमसि " " इदं सर्वं यदयमात्मे " त्यादिषु समानाधिकरणं । " अस्मान्मायीसृजते विश्वमेतत् " "मायान्तु प्रकृतिंविद्यान्मायिनन्तु महेश्वरं " इत्यादिषु व्यधिकरणनिर्देशात्मकं । प्रकरणं च परस्पराकांक्षालक्षणं । तद्यथा – अस्ति तावत्परस्य ब्रह्मणोनिखिलहेयप्रत्यनीकस्य निर्विकारस्यस्वरूपेण चिदचिदात्मक जगद्रूपपरिणामासम्भवात् परिणामघटकद्वारापेक्षा, अस्तिच चिदचितोः तच्छेषतैकस्वरूपस्वभावयो स्तत्तद्विचित्रपरिणामहेतुभूतो पादानगोचरापरोक्षज्ञानचिकीर्षाकृति मदधिष्ठात्रपेक्षा, तदेतदुभयाकांक्षा लक्षणं प्रकरणम् । तथा स्थानंच अनुष्ठानसादेश्यं पाठसादेश्यंचेति द्विविधं । तत्राक्रियात्मकस्य ब्रह्मणोनानुष्ठानसादेश्यं सम्भवति । द्वितीयन्तु :": तस्मात्तमसञ्जायते तमसोभूतादि र्भूतादेराकाशं आकाशाद्वायुर्वायोरग्नि रग्नेरापः अद्भ्यःपृथिवी ' ति सृष्टिवाक्ये " पृथिव्यप्सुप्रलीयते आपस्तेजसिलीयन्ते तेजोवायौलीयते वायुराकाशेलीयते आकाशमिन्द्रियेषु इन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौलीयन्ते भूतादिर्महतिलीः तेःमहानव्यक्तेलीयते अव्यक्तमक्षरे लीयते अक्षरंतमसिलीयते तमःपरेदेव एकीभवती" त्यादौ लयवाक्येच यथासंख्यनिर्देशात्मकं कार्यावस्थालक्षणं मुत्पन्नत्वं कारणाव-

स्याल्लक्षणं लयंचावगमयति । अत्रहियो यदवस्थ ब्रह्मशरीरादुत्पन्नतया जगतः सतदवस्थब्रह्मशरीरएव प्रलीनतया यथा संख्यानिर्देशरूपत्व म वसीयते । समाख्यात्व "अथयोयं शारीरउपद्रष्टे" त्यादौ निखिल जगच्छरीरकत्वादि निमित्तकशारीरादि व्यपदेशः, "एकोहवैनारायण आसी" दित्यादिषु "नराज्जातानितत्वानि नाराणीति ततोविदुः । तान्येवचायनं तस्य तेननारायणस्स्मृतः" इत्यादि निर्वचनावगत सर्वोपादानत्वादि निमित्तक नारायणादि शब्दव्यपदेश, इत्यादिकं सूक्ष्मया दृष्ट्यावधातव्यं । एव मन्यान्यपि प्रमाणानि भाष्यविद्भि रनुसन्धेयानीति ब्रह्म जगतोनिमित्त मुपादानंचेति प्रामाणिकः पन्था इति सर्वमवदातं ।

अभिमत सकलार्था नर्थितेभ्यो ददद्भ्यः
किमविदितमिहास्ति प्रस्तुतंवस्त्वथापि ।
सकलसुजनबन्धौ सत्यषाड्गुण्यसिन्धौ
भगवति भरएष प्रापितोवाग्भरेण ॥
निगमशिखराक्रीडा क्रीडानिरूढ निजाशया
विविधकथको त्कण्ठालुण्टाकपाकवचोभराः ।
यतिपतिमत श्रद्धानिर्वापणैकधुरन्धरा
स्खलितमिहनःक्षन्तुं सन्तोभवन्तुदयामयाः ।
कौण्डिन्यश्रीनिवासा ध्वरिवरकृपया प्यग्रजानुग्रहेण
श्रावंश्रावंससेवं यतिपतिवचसां भावमिष्टानुभावं ।
शुद्धंसिद्धान्तचिन्तामणि मिममतनो च्छ्रीनिवासोविलासा
देनंगृह्णन्तुसन्तः प्रतिकथककथोच्छेदमोदायभूयः ॥
श्रीशैलान्वयमौलि मण्डनमणि श्श्रीतातयार्याग्रणी
र्लक्ष्मांबाच सहाण्णयार्यमखिना प्रासूतयंसादरं ।
तेनश्रीधरनामकेन विदुषा सिद्धान्तचिन्तामणिः
क्लृप्तोलुप्तपरोक्त युक्तिनिकरो भूयात्सतांप्रीतये ॥

इति सिद्धान्तचिन्तामणिः ।

